माणिकचन्द्र दिगम्बर-जैन ग्रन्थमालायाः चतुस्त्रिंशत्तमो ग्रन्थः

नमः श्रीवीतरागाय

सटीक—

# नीतिवाक्यामृतस्य

(अवशिष्टांशम्)

प्रकाशिका—

मा०-दि०-जैनग्रन्थमाला-समितिः

श्रावण, १९८९ वि०

मूल्यं पादरूप्यकम्

# निवेदन

इस ग्रन्थमालामें जिस हस्तलिखित प्रतिके* आधारसे पूर्वमें नीतिवाक्यामृत ( सटीक ) प्रकाशित हुआ था, उसमें ५१ से ७५ तकके २५ पत्र नहीं थे। लगभग दस वर्षके बाद जयपुरनिवासी पं० जवाहिरलालजी साहित्यशास्त्रीके द्वारा उनमेंसे ५५ से ७५ तकके २१ पत्र प्राप्त हो गये हैं जो अब प्रकाशित किये जाते हैं। दुःख है कि ५१ से ५४ तकके चार पत्र फिर भी नहीं मिले जिनमें पुरोहितसमुद्देशके १८ वें सूत्र ( ब्रह्मचर्यमाषोडशाद्वर्षात्ततो गोदानपूर्वकं दारकर्म चास्य ) से ५१ वें सूत्र ( शूद्रस्त्राविद्रावणकारि गलगर्जित ग्रामदूषणा ) तककी टीका थी। जहाँ तक हमारा खयाल है पुस्तक स्वामी और उनके पाससे प्रति लाने और देनेवाले किसी पण्डितकी असावधानीसे उक्त चार पत्र कहीं नष्ट हो गये हैं और इसलिए जब तक इस टीकाकी कोई दूसरी प्रति कहीं उपलब्ध न हो, तब तक इस नष्ट भागकी पूर्ति होनेकी सम्भावना नहीं है।

जिन सज्जनोंके पास पूर्वप्रकाशित नीतिवाक्यामृत हो, उन्हें यह अवशिष्टांश अवश्य मँगा लेना चाहिए।

बम्बई, २-८-३२ ]

निवेदक—
नाथूराम प्रेमी।

---

*इस प्रतिका विस्तृत इतिहास नीतिवाक्यामृतकी भूमिकामें देखिए।

श्रीमत्सोमदेवसूरिविरचितं

# नीतिवाक्यामृतम्

सटीकम्

[ अवशिष्टांशम् ]

अथ विभवो मनुष्याणां यथा भवति तदाह—

स[1] विभवो मनुष्याणां यः परोपभोग्यो न तु यः स्वस्यैवोपभोग्यो व्याधिरिव ॥ १ ॥

टीका—मनुष्याणां पुरुषाणां स विभवः श्लाघ्यो यः किंविशिष्टः ? परोपभोग्यः परैरन्यैर्यो[2] भुज्यते । न तु केवलं व्याधिरिव यः स्वयमात्मना भुज्यत इति । तथा च वल्लभदेवः—

---

१ मुद्रितपुस्तके 'स विभवो मनुष्याणां यः परोपभोग्यो न तु व्याधिरिव यः स्वस्यैवात्मभोग्यः ' इति पाठः । २ परैरात्मीयमित्रादीनां भाण्डपचनादिभिरित्यर्थः ।

किं तया क्रियते लक्ष्म्या या वधूरिव केवला।
या न वेश्येव सामान्या पथिकैरुपभुज्यते ॥ १ ॥

अथ गुरु-जनक सुहृदमर्भकविषये यदाह—

स किं गुरुः पिता सुहृद्वा योऽभ्यसूययाऽर्भं बहुदोषं बहुषु वा दोषं प्रकाशयति न शिक्षयति च ॥ २ ॥

टीका—स किं गुरु पिता सुहृद्वा त्रयाणामपि य. न शिक्षयति । कं ? अर्भकं, किंविशिष्टं ? बहुदोषं, कया कृत्वा ? अभ्यसूयया अतिकोपप्रदया, केषु ? बहुषु बालकेषु प्रकाशयति प्रकटं करोति, न शिक्षयति न शिक्षां ददाति, स त्रयाणामेकोऽपि न स्यात् । शत्रुरित्यर्थः । तस्माच्छिष्यस्य दोषं न प्रकाशयेत् शिक्षामेव दद्यात् । तथा च गौतमः—

शिक्षा यथात्स्यशिष्यस्य तद्दोषं न प्रकाशयेत् ।
ईर्ष्यागर्भं मंथवाच प्रभूतस्य जनामतः ॥ १ ॥

अथ प्रभोः स्वरूपमाह—

स किं प्रभुर्यश्चिरसेवकेष्वेकमप्यपराधं न सहते ॥ ३ ॥

टीका—चिरसेवकस्य प्रभूतकालसेवकस्य एकमप्यपराधं दोषं न सहते । तस्मात्स्वामिना चिरकालसेवकस्य प्रथमोऽपराधः सहनीयः । तथा च शुक्र —

चिरकालचरो भृत्यो भक्तियुक्तः प्रसेवयेत् ।
न तस्य निग्रहः कार्यो दोषस्यैकस्य कारणात् ॥ १ ॥

इति पुरोहित समुद्देश

१ मु. पुस्तके ' प्रकाशयन् शिक्षयति ' इति पाठः ।
२ अत्र " स कुलीनश्च प्रभुः " इति पाठान्तरम् ।

# १२ सेनापतिसमुद्देशः

अथ सेनापतिसमुद्देशो व्याख्यायते । तत्रादावेव सेनापतिगुणानाह—

अभिजनाचारप्राज्ञानुरागशौचशौर्यसम्पन्नः[1] प्रभाववान्, बहुबान्धवपरिवारो, निखिलनयोपायप्रयोगनिपुणः समभ्यस्तसमस्तवाहनायुधयुद्धलिपिभाषात्मपरिज्ञानस्थितिः सकलतन्त्रसामन्ताभिमतः, साङ्ग्रामिकाभिरामिकाकारशरीरो, भर्तुरादेशाभ्युदयहितवृत्तिषु निर्विकल्पः स्वामिनात्मवन्मानार्थप्रतिपत्तिः, राजचिह्नैः सम्भावितः, सर्वक्लेशायाससह, इति सेनापतिगुणाः ॥ १ ॥

टीका—यस्यैतेऽग्रोद्दिष्टिता गुणा सन्ति स सेनापतिः कार्यः । क एते गुणा ? योऽभिजनयुक्तः कुलीनः, तथा आचारव्यवहारसम्पन्नः, तथा प्राज्ञः पण्डितः, तथा जनानुरागयुक्तः, तथा शौचानुगमनवान्, तथा शौर्यसम्पन्नो विक्रमयुक्तः, तथा प्रभाववान् माहात्म्यवान्, तथा बहुबान्धवपरिवारः प्रभूतपितृभ्रातृपरिवारेति, तथा निखिलनयोपायप्रयोगनिपुणः समस्तनीतिविचक्षणः, तथा समभ्यस्तवाहनायुधलिपिभाषात्मपरिज्ञानस्थितिः, समभ्यस्ता शिक्षिता समस्तवाहनानामश्वादीनां, तथा खड्गमुद्गरादीनां, तथा काश्मीरजादिलिपीनां, तथा विभिन्नदेशोद्भवभाषा, तथा आत्मपरिज्ञानयुक्त एतेषां गुणानामभ्यस्ता स्थितिः स्यात् येन, तथा सकलतन्त्रसामन्ताभिमतः—तन्त्रं सैन्यं, सामन्ताः प्रधानसेनकास्तेषां समस्तानां योऽभिमतो वल्लभः, तथा साङ्ग्रामिकाभिरामिकाकारशरीरः

---

१ मु पु निखिलोपायप्रयोगनिपुण इति पाठः । २ अत्र पितृव्य इति पाठः समीचीनः । ३ उभया चामादय प्रयोगा अभिमतलक्ष्यादय । ४ अध्ययनं तथा आत्मपरिज्ञानस्य एतयोः सर्वेषां गुणानां स्थितिः इति सम्यगागतिः ।

सङ्ग्रामे युद्धे आभिगामिको मनोज्ञः आकार आकृतिर्यस्य, शरीरे सोत्साह इत्यर्थः। तथा भर्तुरादेशाभ्युदयहितवृत्तिषु निर्विकल्पः—न विद्यते विकल्पो शिथिलता यस्य सः। क्वचिपथे ? स्वाम्यादेशो भर्तुरादेशोऽभ्युदयो विजयो हितमनुकूलमेतेषां या वृत्तिर्वर्त्तनं तासु वृत्तिषु यो विकल्पं न करोति, तथा स्वामिनात्मसन्मानार्थप्रतिपत्तिः—स्वामिना प्रभुणा आत्मसन्मानार्थप्रतिपत्तिः, तथा राजचिह्नैः सम्भावितो राज्ये यानि चिह्नानि छत्रचामरादीनि तैः सम्भावितो युक्तः। तथा सर्वक्लेशायाससहः सर्वे ये क्लेशाः कष्टानि आयासाः खेदाः तेषां सहः समर्थः, इति सेनापतिगुणाः। तथा च शुक्रः—

सर्वैर्गुणैः समोपेतं सेनानाथं करोति यः।
भूमिपालो न चाप्नोति स शत्रुभ्यः पराभवम्॥ १॥

अथ सेनापतिदोषा व्याख्यायन्ते—

स्वैः परैश्च प्रधृष्यप्रकृतिरप्रभाववान् स्त्रीजितत्वमौद्धत्यं व्यसनिताऽक्षयव्ययप्रवासउपहतत्वं तन्त्राप्रतीकारः सर्वैःसह विरोधः परपरीवादः परुषभाषित्वमनुचितज्ञताऽसंविभागित्वं स्वातन्त्र्यात्मसम्भावनोपहतत्वं स्वामिकार्यव्यसनोपेक्षः सहकारिकृतकार्यविनाशो राजहितवृत्तिषु चेर्ष्यालुत्वमिति सेनापतिदोषाः॥ २॥

टीका—स्वैः परैश्च प्रधृष्यः यः स्वैरात्मीयैः परैश्च प्रधृष्यप्रकृतिः प्रकर्षेण यस्य प्रकृतयः प्रधानपुरुषाः प्रधृष्यन्ते पराभवं लभन्ते स सेनापतिर्न कार्यो यतः स कापुरुषः। तथा अप्रभाववान् माहात्म्यरहितः, तथा स्त्रीजितत्वं स्त्रीभिर्जीयते यः, तथा औद्धत्यं सगर्वः, तथा व्यसनिता व्यसनाभिभूतो यः, तथा अक्षयव्ययप्रवासः अक्षयाननन्तौ व्ययप्रवासौ यस्य

१ मुद्रितपुस्तके "साङ्ग्रामिकाभिगामिकाकारशरीर" इति पाठः। व्याख्या स्वयं साङ्ग्रामिकान् योऽभिगन्तुं समर्थः साङ्ग्रामिकाभिगामिकः तदाकारं शरीरं यस्य।

स । तथा उपहतत्वं दरिद्रता, तथा तत्प्रतीकारः सैन्यस्य योऽपराधान् करोति, तथा सर्वैः सह विरोध, परपरीवादः यस्य जननिन्दा, तथा परुषभाषित्वं निष्ठुरवचनं, तथा अनुचितज्ञता अनुचितमयोग्यं यत्तजानाति न योग्यं, तथा असंविभागित्वं एकाकी यदुपार्जितं तद्भक्षयति, तथा स्वातन्त्र्यात्मसम्भावनोपहतत्वं आत्मप्रभुत्वस्य या सम्भावना तया उपहत, तथा स्वामिकार्यव्यसनोपेक्षः य स्वामिकार्यमुपेक्षते न स्वयमेव तत्साधयेत्, तथा प्रभोर्व्यसनं सञ्जातमुपेक्षते न सद्भावं कृत्वा तद्विनाशयति, तथा सहकारिकृतकार्यविनाशः । सहकारिभिः कार्ये कृते तस्य कार्यस्य विनाश, तथा राजहितवृत्तिषु चेर्ष्यालुत्वम् । एते सेनापतिदोषाः । तथाच गुरु —

सेनापतिं स्वदोषाढ्यं यः करोति स मन्दधीः ।
न जयं लभते सख्ये बहुसेनोऽपि स क्वचित् ॥ १ ॥

अथ राजपुरुषो यथा चिरं जीवति तदाह—

**स चिरं जीवति राजपुरुषो यो नगरनापित इवानुवृत्तिपरः ॥ ३ ॥**

टीका—सर्वासु प्रकृतिषु यो राजपुरुषो राजा सेवकसामान्यो भवति, स चिरं प्रभूतकालं जीवति । किंविशिष्टः सन्[१] विनयपरः सन्, कासु[२] प्रकृतिषु राजप्रधानपुरुषेषु, क इव[३] नगरनापित इव यथा परस्य सन् पत्तनमध्यगः सर्वजनेषु विनयपरश्चिरं नन्दति तथा राजपुरुषोऽपि । तथाच शुक्र —

सेवकः प्रकृतीनां यो नम्रतां याति सर्वदा ।
स नन्दति चिरं कालं भूपस्यापि प्रियो भवेत् ॥ १ ॥

इति सेनापतिसमुद्देशः ।

## १३ दूतसमुद्देशः ।

अथ दूतसमुद्देशो व्याख्यायते । तत्रादौ दूतस्य लक्षणमाह—

**अनासन्नेष्वर्थेषु दूतो मन्त्री ॥ १ ॥**

टीका—अनासन्नेषु दूरान्तरेषु अर्थेषु प्रयोजनेषु देशान्तरसंस्थेषु यो याति दूतो राजदौवारिकस्तत्काले मन्त्रिस्थाने स राज्ञो भवति, यतस्तद्वक्त्रेण तत्कार्यं सिद्ध्यति । तथा च राजपुत्र —

देशान्तरस्थितं कार्यं दूतद्वारेण सिद्ध्यति ।
तस्माद्दूतो यथा मन्त्री तत्कार्यं हि प्रसाधयेत् ॥ १ ॥

अथ दूतेन यादृशेन भाव्यं तदाह—

**स्वामिभक्तिरव्यसनिता दाक्ष्यं शुचित्वममूर्खता प्रागल्भ्यं प्रतिभानवत्वं क्षान्तिः परमर्मवेदित्वं जातिश्च प्रथमे दूतगुणाः ॥ २ ॥**

टीका—स्वामिभक्तियुक्त तथा अव्यसनिता अव्यसनित्व, तथा दाक्ष्य दक्षता, तथा शुचित्व निर्मलशरीरवस्त्रधारण, तथा अमूर्खता पाण्डित्य तथा प्रागल्भ्य उदारत्व, तथा प्रतिभानत्व प्रज्ञोत्कर्ष, क्षान्ति सहिष्णुता, तथा परमर्मवेदित्व शत्रुरहस्यज्ञातृत्व, तथा जातिश्चोत्तमकुलत्वं, प्रथमे आद्या एते गुणा दूतस्य । तथा च शुक्र —

दक्ष जात्यं प्रगल्भं च, दूतं य. प्रेषयेन्नृपः ।
अन्यैश्च स्वगुणैर्युक्त तस्य कृत्यं प्रसिद्ध्यति ॥ १ ॥

अथ त्रिविधदूतस्य लक्षणमाह—

**स त्रिविधो निसृष्टार्थः परिमितार्थः शासनहरश्चेति ॥ ३ ॥**

**यत्कृतौ स्वामिनः सन्धिविग्रहौ प्रमाणं स निसृष्टार्थः, यथा कृष्णः पाण्डवानाम् ॥ ४ ॥**

टीका—यः कृतौ येन दूतेन गतेन निहितौ सन्धिविग्रहौ प्रमाणे भवतः स दूतः स्वामिनः प्रभोः निसृष्टार्थः कथ्यते । पाण्डवानां वासुदेवो यथा । तथा च भृगुः —

यद्वाक्यं नान्यथाभावि प्रभोर्यद्यप्यनीप्सितम् ।
निसृष्टार्थः स विज्ञेयो दूतो नीतिविचक्षणैः ॥ १ ॥

अथ परिमितार्थस्य दूतस्य लक्षणमाह—

यत्प्रोक्तं प्रभुणा वाक्यं तत्प्रमाणं वदेच्च यः ।
परिमितार्थ इति ज्ञेयो दूतो नान्यं ब्रवीति यः ॥ १ ॥

अथ शासनहरस्य लक्षणमाह—

प्रभुणा लेखितं यच्च तत्परस्य निवेदयेत् ।
यः शासनहरः सोऽपि दूतो ज्ञेयो नयान्वितैः ॥ १ ॥

अथ दूतेन परस्थानगतेन यत्कृत्यं तदाह—

अविज्ञातो दूतः परस्थानं न प्रविशेन्निर्गच्छेद्वा ॥ ५ ॥

टीका—न प्रविशेन्न प्रवेशं कुर्यात् । कोऽसौ ? दूतः । किं तत् ? परस्थानं शत्रुनिवासं, निर्गच्छेद्वा तस्माच्छत्रुस्थानात् । किंविशिष्टः सन् ? अविज्ञातः सन् । केन ? परेण शत्रुणा । अविज्ञातो यः प्रवेशं करोति निर्गच्छेद्वा स दूतः पराभवमाप्नोति । तथा च गुरुः —

शत्रुणा योऽपरिज्ञातो दूतस्तत्स्थानमाविशेत् ।
निर्गच्छेद्वा ततः स्थानात्स दूतो वधमाप्नुयात् ॥ १ ॥

अथ शत्रुणा स्वघातुकामेनाज्ञातो दूतो यत्करोति तदाह—

मत्स्वामिना सन्धातुकामो रिपुर्मां विलम्बयितुमिच्छतीत्यननुज्ञातोऽपि दूतोऽपसरेद् गूढपुरुषान्वाऽवसर्पयेत् ॥ ६ ॥

टीका—तदाऽननुज्ञातोऽपि तेनापसरेत् गच्छेत्स्वामिनं प्रति, वा अथवा न गच्छेत् तद्गूढपुरुषान् प्रच्छन्नदूतानवसर्पयेत्तत्समीपं प्रेषयेत् यदेष ते परं असन्धातुकाम इति । तथा च हारीत —

असन्धानं परं शत्रुं दूतो ज्ञात्वा विचक्षणः ।
अननुज्ञोऽपि गृहं गच्छेद्गूढान्वा प्रेषयेच्चरान् ॥ १ ॥

अथ शत्रुणा प्रेषितो यच्चोरं करोति तदाह—

**परेणाशु प्रेषितो दूतः कारणं विमृशेत् ॥ ७ ॥**

टीका—पर्यालोचयेत् । कोऽसौ ? दूत । किं तत् ? कारणं । किंविशिष्टो दूतः ? प्रेषित । कथं ? आशु शीघ्रं । केन ? परेण शत्रुणा । यदि दर्शनमात्रेणापि दूतं शत्रुः प्रेषयति तत्तेन कारणं चिन्तनीयं किमर्थमहमनेन दूतः प्रेषितः, अवश्यं पापबुद्धिरयं मम स्वामिनं प्रति । तस्तस्य रिक्तयति एतान् पदार्थान् वक्ष्यमाणान्करोति । तथा च गर्ग —

शत्रुणा प्रेषितो दूतो यच्छीघ्रं प्रविचिन्तयेत् ।
कारणं चैव विज्ञाय कुर्यात् स्वामिहितं ततः ॥ १ ॥

अथ दूतेन परस्थानस्थितेन स्वामिहितं यत्कार्यं तदाह—

**कृत्योपग्रहोऽकृत्योत्थापनं सुतदायादावरुद्धोपजापः स्वमण्डलप्रविष्टगूढपुरुषपरिज्ञानमन्तपालाटविककोशदेशतन्त्रमित्रावबोधः कन्यारत्नवाहनविनिश्रावणं स्वाभीष्टपुरुषप्रयोगात् प्रकृतिसंक्षोभकरणं दूतकर्म ॥ ८ ॥**

टीका—कृत्योपग्रहः कृत्यानां योऽसौ उपग्रहो विनाशः स उपायैः कर्तव्यः । तथा अकृत्योत्थापनं अकृत्यानां यथा उत्थापनं भवति तथा कार्यं । तथा सुतदायादावरुद्धानां भेदः ये च राज्ञः पुत्रा भवन्ति तथा

दायादा गोत्रिणः तथा अवरुद्धा बन्दीकृता ये ते भेदनीयाः । तथा स्व-मण्डलप्रविष्टगूढपुरुषपरिज्ञानं स्वमण्डले स्वदेशे ये शत्रुणा प्रेषिता गूढ-चरास्ते ज्ञातव्याः । तथा अन्तपालाटविककोशदेशतन्त्रमित्रावबोधः कन्या-रत्नवाहनविनिश्रावणम्, अन्तपालाः सीमाधिपाः, आटविका भिल्लादयः, तथा कोशः भाण्डागारं, देशो राष्ट्रं, तन्त्रं सैन्यं, तथा मित्रावबोधः, तथा कन्यारत्नं यच्चास्य गृहे तिष्ठति तथा वाहनानि यानि तस्य गृहे तिष्ठन्ति तथा तथा विनिश्रावणं, स्वस्वामिनो गूढचरैः कथनीयं । प्रकृतिक्षोभणं च एतेषां करणीयं येन क्षोभो भवति । इति दूतकर्म ।

**मन्त्रिपुरोहितसेनापतिप्रतिबद्धपूजनोपचारविस्रम्भाभ्यां शत्रो-रितिकर्तव्यतामन्तःसारतां च विद्यात् ॥ ९ ॥**

टीका—तथा न केवलमेतत् पूर्वोक्तमेव कुर्याद्दूतः एतच्च कुर्यात् । किं तत् । मन्त्रिपुरोहितसेनापतीनां ये प्रतिबद्धाः समीपवर्तिनः भवन्ति तेषामपेक्षितेन पूजा स्तुतिः उपचारो दानं द्वाभ्याम् एव पूजोपचाराभ्यां विश्वासयित्वा, शत्रोरिति-कर्तव्यता एतदेव करिष्यति स्म एवं ज्ञात्वा तस्यान्तःसारतां कोशाश्व-गजादिप्रमाणं च विद्यात् ।

अथ स्वयमशक्तेनानिष्टे ना अभुहतेन यत्कर्तव्यं तदाह—

**स्वयमशक्तः परेणोक्तमनिष्टं सहेत ॥ १० ॥**

टीका—यदि स्वयं परुषं वक्तुमसमर्थो भवति तदा शत्रुणा यदुक्तं परुषं तत्सहेत नोत्तरं दद्यात् । तथा च शुक्रः—

> **असमर्थेन दूतेन शत्रोर्यत्परुषं वचः ।**
> **तत्क्षन्तव्यं न दातव्यमुत्तरं श्रियमिच्छता ॥ १ ॥**

अथ यस्मिन् परिवादे न क्षन्तव्यं तदाह—

**गुरुषु स्वामिषु वा परिवादे नास्ति क्षान्तिः ॥ ११ ॥**

टीका—यदि शत्रुस्तद्गुरोर्निंदा करोति स्वामिनो वा, तदा नास्ति क्षान्ति । यदि मृत्युर्भवति तदापि न क्षन्तव्यमिति । तथा च जैमिनि —

गुरोर्वा स्वामिनो वापि कृता निन्दा परेण [illegible] ।
[illegible] शृणोतीति न कुप्येच्च स पुमान्नरकं व्रजेत् ॥ १ ॥

अथान्येन पुरुषेण यियासता यत्कृत्यं तदाह—

**स्थित्वापि यियासतोऽवस्थानं केवलमुपक्षयहेतुः ॥ १२ ॥**

टीका—स्थित्वापि यियासतो गन्तुमिच्छतो यदवस्थानं अगमनं तद् किं विशिष्टं ? नैरन्तर्येण उपक्षयहेतु । देशान्तरं गन्तुमिच्छता पुरुषेण यद्विलम्बः क्रियते तत्केवलमुपक्षयकारणं तस्माद् गन्तव्यमेव । तथा च रैभ्य —

अवश्यं यदि गन्तव्यं तदा कुर्याद्विलम्बनम् ।
गन्तव्यमेव नो चेद्धि तस्माद्धनपरिक्षयः ॥ १ ॥

अथ राज्ञा यथा परदूता द्रष्टव्यास्तदाह—

**वीरपुरुषपरिवारितः शूरपुरुषान्तरितान् दूतान्पश्येत् ॥ १३ ॥**

टीका—दूतान् परदेशोपगतान् पश्येत् अवलोकयेत् । किंविशिष्टान् दूतान् ? शूरपुरुषान्तरितान् शूरपुरुषान्तरे कृत्वा । किंविशिष्टः सन् ? वीरपुरुषपरिवारितः सन् । तथा च नारद —

परदूतान् नृपः पश्येद्वीरैर्बहुभिरावृतः ।
शूरैरन्तर्गतस्तेषां चिरंजीवितुमिच्छया ॥ १ ॥

**श्रूयते हि किल चाणक्यस्तीक्ष्णदूतप्रयोगेणैकं नन्दं जघान १४**

टीका—एतत् किल श्रूयते योऽसौ चाणक्यः स तीक्ष्णदूतप्रयोगेण तीक्ष्णाभिधदूता मृत्यास्तेषां प्रयोगेण नन्दमेकमद्वितीयमपि जघान ।

अथान्यदपि भूभुजा यत्कृत्यं तदाह—

**शत्रुप्रहितं शासनमुपायनं च स्वैरपरीक्षितं नोपाददीत ॥१५॥**

टीका—नोपाददीत न गृह्णीयात् । कोऽसौ ? राजा । किं तत् ? शासनं लिखितं । किंविशिष्टं ? शत्रुप्रहितं वैरिप्रेषितं, न केवलं शासनमुपायनं ढौकनीयं च । कथं न गृह्णीयात् ? यावन्न परीक्षितं । कैः ? स्वैरात्मीयपुरुषैः । तथा च शुक्रः—

> यावत्परीक्षितं न स्वैर्लिखितं प्राभृतं तथा ।
> शत्रोरभ्यागतं राज्ञा तावद्ग्राह्यं न तद्भवेत् ॥ १ ॥

**श्रूयते हि किल स्पर्शविषवासिताद्भुतवस्त्रोपायनेन करहाटपतिः कैटभो वसुनामानं राजानं जघान ॥ १६ ॥**

एतस्मात्कारणाच्छत्रूपायनं स्वैरपरीक्षितं नाददीत । तथा—

**आशीविषविषधरोपेतरत्नकरण्डकप्राभृतेन च करपालः करालं जघान ॥ १७ ॥**

टीका—सूत्रद्वयमपि गतार्थम् ।

अथ राज्ञो दूतस्य यत्कर्तव्यं तदाह—

**महत्यपराधेऽपि न दूतमुपहन्यात् ॥ १८ ॥**

टीका—नोपहन्यात् न वध्यात् । कं ? दूतं । कोऽसौ ? राजा । कस्मिन्सति ? अपराधे । किंविशिष्टे ? महत्यपि गुरुतरेऽपि । तथा च शुक्रः—

> दूतं न पार्थिवो हन्यादपराधे गरीयसि ।
> कृतेऽपि तत्क्षणात्तस्य यदीच्छेद्भूतिमात्मनः ॥ १ ॥

अथ यस्मान्न हन्तव्यो दूतस्तत्कारणमाह—

उद्धृतेष्वपि शस्त्रेषु दूतमुखा वै राजानः ॥ १९ ॥

टीका—यस्मात्कारणदुद्धृतेष्वपि शस्त्रेषु प्रहरणेषु पतत्सु राजानस्तु दूतमुखा भवन्ति, दूतवचनेन तेषां कार्यं सिद्ध्यति ।

तथा च गुरु —

अपि संग्रामकालेऽपि वर्त्तमाने सुदारुणे ॥
स्पर्धन्ति समुखा दूता वधस्तेषां न कारयेत् ॥ १ ॥

अथ भूयोऽपि राज्ञा दूतविषये यत्कृत्यं तदाह—

तेषामन्तावसायिनोऽप्यवध्याः ॥ २० ॥

टीका—तेषां दूतानां ये अन्तावसायिनश्चाण्डालास्तेऽप्यवध्याः ।

तथा च शुक्र —

अन्तावसायिनो येऽपि दूतानां प्रभवन्ति च ।
अवध्यास्तेऽपि भूपानां स्वकार्यपरिसिद्धये ॥ १ ॥

किंपुनर्ब्राह्मणाः ॥ २१ ॥

टीका—गतार्थमेतत् ।

अथ दूतस्य लक्षणमाह—

अवध्यभावो दूतः सर्वमेव जल्पति ॥ २२ ॥

टीका—योऽसौ दूत सोऽवध्यभाव अयोग्यवध सर्वं यत्किंचित् प्रभुणा प्रोक्त स निष्ठुरमपि वदति न दोष ।

अथ दूतवचनानि श्रुत्वा भूभुजा यत्कर्त्तव्यं तदाह—

कः सुधीर्दूतवचनात्परोत्कर्षं स्वापकर्षं च मन्येत ॥ २३ ॥

टीका—को मन्येत क सम्मानयति ? राजा। किंविशिष्ट ? सुधी शोभनमति । क ? परोत्कर्षं शत्रुस्तवनं तथा स्वापकर्षं आत्मनिन्दां

कस्मात्? दूतवचनात्। तस्मान्नृपजा दूतवचनानि शुभान्यशुभान्यपि श्रोतव्यानीति। तथा च वसिष्ठः—

श्रोतव्यानि महीपेन दूतवाक्यान्यशेषतः।
विशेषेणेर्ष्यां परित्यज्य शुभाशुभान्यपि॥ १॥

अथारिदूतस्य राज्ञा यत्कर्तव्यं तदाह—

**स्वयं रहस्यज्ञानार्थं परदूतो नयार्थैः स्त्रीभिरुभयवेतनैस्तद्गुणाचारशीलानुवृत्तिभिर्वा वंचनीयः॥ २४॥**

टीका—प्रणिपातव्यः। कोऽसौ? परदूतः शत्रुदूतः। कैः कृत्वा? नयार्थैर्नीतिपूर्वकैः। किंविशिष्टैः? स्त्रीभिस्तद्देश्याभिः, तथा उभयवेतनैः ये स्वामिनः शत्रोरपि वेतनं गृह्णन्ति ते उभयवेतनास्तैरपि दूतः प्रणिपातव्यः। किमर्थं? रहस्यपरिज्ञानार्थं। तथा तद्गुणाचारशीलानुवृत्तिभिः ये तद्गुणान् जानन्ति आचारं जानन्ति शीलं जानन्ति तस्यानुवृत्तिं कुर्वन्ति तैर्वा प्रणिपातव्यः नीतिपूर्वकैः। येन तैः पृष्टः स्वकीयं रहस्यं वदति, हृदयस्य परस्य वा रहस्यं गुह्यं वदतीति। तथा च शुक्रः—

दूतस्य यद्रहस्यं च तद्वेद्योभयवेतनैः।
तच्छीलैर्वा परिज्ञेयं येन शत्रुः प्रसिद्ध्यति॥ १॥

अथ शत्रुलेखानां स्वरूपमाह—

**चत्वारि वेष्टनानि खड्गमुद्रा च प्रतिपक्षलेखानाम्॥ २५॥**

टीका—ये प्रतिपक्षलेखाः शत्रुलेखा भवन्ति तेषामुपरि चत्वारि वेष्टनानि बन्धनानि भवन्ति तथा खड्गमुद्रा च॥

इति दूतसमुद्देशः।

## १४ चारसमुद्देशः

अथ चारसमुद्देशो व्याख्यायते। अथ चरा यादृशा भवन्ति तदाह—

स्वपरमण्डलकार्याकार्यावलोकने चराः चक्षूंषि क्षितिपतीनाम् ॥ १ ॥

टीका—राज्ञा चक्षुंषि दृष्टिविषया चरा। कस्मिन् विषये ? स्वमण्डलपरमण्डलकार्याकार्यावलोकने स्वमण्डले च यत्कार्यं परमण्डले च यत्कार्यं तस्य यदवलोकनं दर्शनं तच्चरै राजानो जानन्ति न स्वयं जानन्तीति। तथा च गुरुः—

स्वमण्डले परे चैव कार्याकार्यं च यद्भवेत्।
चरैः पश्यन्ति यद्भूपा सुदूरमपि संस्थिता ॥ १ ॥

अथ चारगुणानाह—

अलौल्यममान्द्यममृषाभाषित्वमभ्यूहकत्वं चारगुणाः ॥ २ ॥

टीका—चराणां ये गुणास्ते किंविशिष्टा ? अलौल्यं सन्तोषस्तावद्, तथा अमान्द्यमनालस्यं नीरोगता वा, तथा अमृषाभाषित्वं सत्यवचनं, अभ्यूहकत्वं ऊहेन युक्तत्वं, एते गुणा येषां चाराणां भवन्ति ते प्रभोः कार्याणि साधयन्ति। तथा च भागुरिः—

अनालस्यमलौल्यं च सत्यवादित्वमेव च।
ऊहकत्वं भवेद्येषां ते चराः कार्यसाधकाः ॥ १ ॥

अथ चाराणां यद्वेतनं तदाह—

तुष्टिदानमेव चाराणां वेतनम् ॥ ३ ॥

टीका—वेतनं वृत्तिः। केषां ? चाराणां। राज्ञः सकाशाद्भवति तुष्टिदानं कार्ये साधिते प्रभूतं देयमिति।

अथ चारास्तुष्टिदानेन लब्धेन स्वामिकार्येषु यथा वर्त्तन्ते तदाह—

**ते हि तल्लोभात्स्वामिकार्येषु त्वरन्ते ॥ ४ ॥**

टीका—ते चारास्तुष्टिदानेन लब्धेन हि स्फुटं तल्लोभात्तल्लौल्यात् त्वरन्ते सत्वराः कार्याणि कुर्वन्ति । तथा च गौतमः —

स्वामितुष्टिप्रदानं ये प्राप्नुवन्ति समुत्सुकाः ।
ते तत्कार्याणि सर्वाणि चराः सिद्धिं नयन्ति च ॥ १ ॥

अथ चाराणां वाक्यस्य यथा स्वामिनः प्रत्ययो भवति तदाह—

**असति संकेते त्रयाणामेकवाक्ये संप्रत्ययः ॥ ५ ॥**

टीका—तदा कार्यसंप्रत्ययो ज्ञेयः । तथा च भागुरिः —

असंकेतेन चाराणां यदा वाक्यं प्रतिष्ठितम् ।
त्रयाणामपि तत्सत्यं विज्ञेयं पृथिवीभुजा ॥ १ ॥

अथ चाररहितो राजा यादृग्भवति तदाह—

**अनवसर्पो हि राजा स्वैः परैश्चातिसन्धीयते ॥ ६ ॥**

टीका—अनवसर्पो राजा चारैर्विना यो राजा सोऽनवसर्पः । सोऽतिसन्धीयते आक्रम्यते । कैः * स्वैरात्मीयैः परैश्च । तस्माद्राज्ञा स्वपक्षे विपक्षे च चाराः प्रेषणीयाः । तथा च चारायणः —

वैद्यसंवत्सराचार्यैश्चारैर्ज्ञेयं निजं बलम् ।
ग्रामाहितुण्डिकोन्मत्तैः परेषामपि भूभुजाम् ॥ १ ॥

अथ चाररहितस्य नृपस्य यद्भवति तदाह—

**किमस्त्ययामिकस्य निशि कुशलम् ॥ ७ ॥**

टीका—यामिकशब्देन प्राहरिक उच्यते । अयामिकस्याप्राहरिकस्य

पुरुषस्य किमस्तिकुशलं अपि ॥ क्षेमं नास्तीति । कस्यां ? निशि । एवं भूपस्यापि चाररहितस्य कुशलं नास्तीति । तथा च गर्गः—

यथा प्राहरिकैर्योहां रात्रौ क्षेमं न जायते ।
चारैर्विना न भूपस्य तथा क्षेमं विचक्षणैः ॥ १ ॥

अथ चाराः के भवन्ति तानाह—

छात्रकापटिकोदास्थितगृहपतिवैदेहिकतापसकिरातयमपट्टिकाऽहितुण्डिकशौण्डिकशौभिकपाटच्चरविटविदूषकपीठमर्दनर्तकगायनवादकवाग्जीवनगणकशाकुनिकभिषगैन्द्रजालिकनैमित्तिकसूदारालिकसंवाहकतीक्ष्णक्रूरजडमूकबधिरान्धछद्मावस्थायियायिभेदेनावसर्पवर्गः ॥ ८ ॥

टीका—चतुर्स्त्रिंशत्प्रमाणा एते भूभुजां चराः । एते स्वपक्षे परपक्षे च ज्ञातव्याः । एतेषां यद्व्याख्यानं तदाचार्येणापि कृतं लिख्यते—

परमर्मज्ञः प्रगल्भश्छात्रः ॥ ९ ॥

यं कमपि समयमास्थाय प्रतिपन्नछात्रवेषकः कापटिकः ॥ १० ॥

प्रभूतान्तेवासी प्रज्ञातिशययुक्तो राज्ञा परिकल्पितवृत्तिरुदास्थितः ११

गृहपतिकवैदेहिकौ ग्रामकूटश्रेष्ठिनौ ॥ १२ ॥

बाह्यव्रतविद्याभ्यां लोकदम्भहेतुस्तापसः ॥ १३ ॥

अल्पाखिलशरीरावयवः किरातः ॥ १४ ॥

* यमपट्टिको गलत्रोटिकः प्रतिगृहं चित्रपटदर्शी वा ॥ १५ ॥

अहितुण्डिकः सर्पक्रीडाप्रसरः ॥ १६ ॥

शौण्डिकः कल्यपालः ॥ १७ ॥

शौभिकः क्षपायां पटावरणेन रूपदर्शी ॥ १८ ॥

अलसाश्च रसादाः ॥ ३७ ॥

३७-३८-३९-४० जडमूकबधिरान्धाः प्रसिद्धाः ।

परमेते कपटेन जडमूकबधिरान्धा न स्वभावतः । एतेषां मध्यादेके स्थायिनः स्वपक्षे योजनीयाः । अन्ये यायिनः परपक्षे योग्यतानुसारेण । तथा च शुक्रः—

> स्थायिनो यायिनश्चारा यस्य सर्पन्ति भूपतेः ।
> स्वपक्षे परपक्षे वा तस्य राज्यं विवर्द्धते ॥ १ ॥

इति चारसमुद्देशः ।

## १५ अथ विचारसमुद्देशः ।

अथ विचारसमुद्देशो व्याख्यायते । तत्रादावेव कार्यनिर्णयमाह—

**नाविचार्य कार्यं किमपि कुर्यात् ॥ १ ॥**

टीका—किमपि स्तोकमपि कार्यं न कुर्यात् । किं कृत्वा ? अविचार्य सगुणं निर्गुणं वा अज्ञात्वा । तथा च जैमिनिः—

> अपि स्वल्पतरं कार्यं नाविचार्य समाचरेत् ।
> यदीच्छेत्सर्वलोकस्य शोभां राजा विशेषतः ॥ १ ॥

अथ विचारलक्षणमाह—

**प्रत्यक्षानुमानागमैर्यथावस्थितवस्तुव्यवस्थापनहेतुर्विचारः ॥२॥**

टीका—योऽसौ विचारः स किंविशिष्टः ? यथावस्थितं सत्यं यद्वस्तु तस्य यद्व्यवस्थापनं प्रतिष्ठा तस्य कारणं स विचारो ज्ञेयः । कैः कृत्वा ? प्रत्यक्षानुमानागमैः प्रत्यक्षं च अनुमानं च आगमश्च प्रत्यक्षानुमानागमास्तैः प्रत्यक्षानुमानागमैर्यस्य विचारस्य प्रतिष्ठा स विचारः । दृष्टानुमानागमलक्षणमाचार्यो भविष्यत्सूत्रेण वदिष्यति । तथा च शुक्रः—

दृष्टानुमानागमज्ञैर्यो विचारः प्रतिष्ठितः।
स विचारोऽपि विज्ञेयस्त्रिभिरेतैश्च यः कृतः ॥ १ ॥

अथ दृष्टस्य लक्षणमाह—

**स्वयं दृष्टं प्रत्यक्षम् ॥ ३ ॥**

टीका—गतार्थमेतत्।

अथान्यदृष्टस्य लक्षणमाह—

**न ज्ञानमात्रत्वात्प्रेक्षावतां प्रवृत्तिर्निवृत्तिर्वा ॥ ४ ॥**

टीका—प्रेक्षावतामवलोकमानानां प्रवृत्तिः प्रवर्तनं निवृत्तिर्वा। केषां? ज्ञानमात्रवतां येषां पुरुषाणां ज्ञानमात्रा दृष्टिर्भवति। कस्मिंश्चित्पदार्थे अनुमानागमाभ्यां वा सुप्रवृत्तिर्निवृत्तिर्वा यथा मृगतृष्णिकादृष्टाद्दुदकं मत्वा विचारणीयमनुमानेन किं मरौ ग्रीष्मकाले सलिलं भवति? अथवा कश्चित्प्रष्टव्यः। ततः प्रवृत्तिर्निवृत्तिर्वा करणीयेति। तथा च गुरुः—

दृष्टमात्रान्न कर्तव्यं गमनं वा निवर्तनम्।
अनुमानेन नो यावद्विद्वाक्येन भाषितम् ॥ १ ॥

अथान्यदपि दृष्टविषये प्राह—

**स्वयं दृष्टेऽपि मतिर्विमुह्यति संशेते विपर्यस्यति वा किं पुनर्न परोपदिष्टे वस्तुनि ॥ ५ ॥**

टीका—मुह्यति मोहं वैचित्त्यं प्रयाति। कासौ कर्त्री? मतिः प्रज्ञा। संशेते वा सदायं गच्छति विपर्यस्यति वा। क विषये? वस्तुनि पदार्थे। किंविशिष्टेऽपि? स्वयं दृष्टेऽपि आत्मावलोकितेऽपि च। यतः आत्मप्रत्यक्षेऽपि पदार्थे मोहं संशयविपर्यासगामिनी मतिर्भवति किम्पुनस्तत्र परोपदिष्टे अन्यनिवेदिते? अपि तु परोपदिष्टे मतिरेवंविधा भवत्येव। तस्मात्कारणाद् दृष्टमात्रस्य पदार्थस्यानुमानेष्टवचनाभ्यां बाह्यपदार्थप्रतिष्ठा नास्ति। तथा च गुरुः—

मोहो वा सहायो वाथ दृष्टश्रुतविपर्यय ।
यत सञ्जायते तस्मात् तामेकां न विभावयेत् ॥ १ ॥

अथ विचारज्ञस्य लक्षणमाह—

**स खलु विचारज्ञो यः प्रत्यक्षेणोपलब्धमपि साधु परीक्ष्यानुतिष्ठति ॥ ६ ॥**

टीका—खलु निश्चयेन विचारज्ञोऽसौ पुमान् यो विचार जानाति। किंविशिष्टो य ? प्रत्यक्षेणाऽपि उपलब्ध साधु परीक्ष्यानुतिष्ठति ।

तथा च ऋषिपुत्रः—

विचारज्ञ स विज्ञेय स्वयदृष्टेऽपि वस्तुनि ।
तावन्नो निश्चय कुर्याद्यावन्नो साधु वीक्षितम् ॥ १ ॥

अथाविचारितप्रयोजनै कृतैर्यद्भवति तदाह—

**अतिरभसात्कृतानि कार्याणि किं नामानर्थं न जनयन्ति ॥७॥**

टीका—अतिरभसादत्यौत्सुक्यात्कृतानि यानि कार्याणि तानि नाम अहो क नाम अनर्थं न जनयन्ति, अपि तु प्रभूतमनर्थं जनयन्तीति ।

तथा च भागुरि —

सगुणमविगुण वा कुर्वता कार्यमादौ
परिणतिरवधार्या यत्नत पण्डितेन ।
अतिरभसकृतानां कर्मणामाविपत्ते-
र्भवति हृदयदाही शल्यतुल्यो विपाक ॥ १ ॥

अथाविचार्यकृते कर्मणि यद्भवति तद्विषयेऽप्याह—

**अविचार्यकृते कर्मणि यत्पश्चात्प्रतिविधानं गतोदके सेतुबन्धनमिव ॥ ८ ॥**

टीका—अपर्यालोचिते कार्ये कृते पश्चात्तस्य प्रतिविधान क्रियते। तद् किंविशिष्ट ? गतोदके सेतुबन्धनमिव । यथा उदके गते सेतुबन्ध क्रियते

तथा तस्यापि कार्यस्य प्रतिविधानं । तस्मात्सर्वमपि कृत्यं पर्यालोच्य कर्त्तव्यमिति । तथा च शुक्रः —

सर्वेषामपि कार्याणां यो विधानं न चिन्तयेत् ।
पूर्वं पश्चाद्भवेद् व्यर्थं सेतुर्नष्टे यथोदके ॥ १ ॥

अथ राजपुत्रगुणद्वारेणान्यदप्युपमानमाह—

**आकारः शौर्यमायतिर्विनयश्च राजपुत्राणां भाविनो राज्यस्य लिङ्गानि ॥ ९ ॥**

टीका—एते गुणा येषां राजपुत्राणां भवन्ति । एतैर्गुणानुमानैर्ज्ञायते ते पार्थिवा भविष्यन्ति । यतो भाविनो राज्यस्य एतानि चिह्नानि । आकार शुभमूर्तित्वं, शौर्यं च पराक्रमं, आयतिपरिग्रहो विस्तारः, विनयो नम्रता, एतैरुपमानै राजपुत्राणां राज्यप्राप्तिर्ज्ञेया । तथा च राजपुत्रः—

आकारो विक्रमो बुद्धिर्विस्तारो नम्रता तथा ।
बालानामपि येषां स्युस्ते स्युर्भूपा नृपात्मजाः ॥ १ ॥

अथान्यान्यपि चिह्नानि भविष्यप्राप्तशुभाशुभस्योपमानद्वारेण प्राह—

**प्रकृतेर्विकृतिदर्शनं हि प्राणिनां भविष्यतः शुभाशुभस्य चापि लिङ्गम् ॥ १० ॥**

टीका—प्रकृतेः सकाशाद्विकृतिदर्शनं प्राणिनां जन्तूनामपि लिङ्गं चिह्नं भवति । कस्य [१] शुभाशुभस्य । किंविशिष्टस्य [२] भविष्यतो भाविनः । यदा शुभभावोऽशुभे वर्त्तते तदा तेनानुमानेन ज्ञेयमस्याशुभं भविष्यतीति । यदा पुनरशुभभावस्य शुभभावो भवति तदा ज्ञेयमस्य शुभं भविष्यतीति । तथा च नारदः—

शुभभावो मनुष्याणां यदा पापे प्रवर्तते ।
पापो वाथ शुभे तस्य तदाऽनिष्टं शुभं भवेत् ॥ १ ॥

अथ पुरुषस्य सम्भावना यथा ज्ञायते तदाह—

य एकस्मिन्कर्मणि दृष्टबुद्धिः पुरुषकारः स कथं कर्मान्तरेषु न समर्थः ? ॥ ११ ॥

टीका—यस्य पुरुषस्य बुद्धिर्दृष्टा भवति विज्ञाने विषये तथा पुरुषकारश्च, स पुरुषः कर्मान्तरेष्वन्यकृत्येषु कथं समर्थो न भवति ? पूर्वदृष्टबुद्धिपुरुषकारोपमानेन समर्थो भवति। तथा च जैमिनिः—

पूर्वं यस्य मतिर्दृष्टा पुरुषार्थोऽपरस्तथा।
पश्चात्तेनानुमानेन तस्य ज्ञेया समर्थता ॥ १ ॥

अथागमलक्षणमुच्यते—

आप्तपुरुषोपदेश आगमः ॥ १२ ॥

टीका—अत्रागमशब्देनाप्तपुरुषः इष्टपुरुषः कथ्यते स कथयति दृष्टं वा उपमानान्वितं तद्वचनेन तत्प्रमाणम्। तथा च जैमिनिः—

स्वयं दृष्टं भवेद्यच्च अनुमानेन भावितम्।
यद्वस्तुनिश्चयो वाच्यस्तस्याप्तवचनेन तु ॥ १ ॥

अथाप्तलक्षणमाह—

यथानुभूतानुमतश्रुतार्थाविसंवादिवचनः पुमानाप्तः ॥ १३ ॥

टीका—य आप्तः ॥ किंविशिष्टो भवति ? यथानुभूतानुमतश्रुतार्थैर्नाविसंवादि अचलं वचनं यस्य स तथा। यथानुभूतं सत्यं अनुमतं लोकसमतं तथा श्रुतोऽर्थो यस्य वचनस्य स आप्तपुरुषः। तथा च हारीतः—

यः पुमान् सत्यवादी स्यात्तथा लोकस्य संमतः।
श्रुतार्थो यस्य नो वाक्यमन्यथाप्तः स उच्यते ॥ १ ॥

अथ युक्तिलक्षणमाह—

सा वागुक्ताऽप्यनुक्ता यत्र नास्ति सा सद्युक्तिः ॥ १४ ॥

टीका—यत्र यस्या वाचि प्रोक्ताया न भवति। काऽसौ ? सद्युक्तिः

शोभनाभिप्रायः । सा वाग् प्रोक्ताप्यप्रोक्तसमा अनुक्ततुल्या । तथा च हारीत —

सा वाग्युक्तिपरित्यक्ता कार्यस्याल्पाधिकस्य या।
सा प्रोक्तापि वृथा ज्ञेया त्वरण्यरुदितं यथा ॥ १ ॥

अथ वचनगौरवं यथा भवति तदाह—

**वक्तुर्गुणगौरवाद्वचनगौरवम् ॥ १५ ॥**

टीका—यद्वचनगौरवं वाक्यश्लाघा भवति सा कस्मात् ? गुणगौरवात् गुणगुरुत्वात् । कस्य ? वक्तुः प्रजल्पकस्य । यदि वक्ता गुणाढ्यो भवति तस्य तद्वचनमपि श्लाघ्यं भवति । अथ मूर्खो भवति तदा तद्वचनं सभामध्ये हास्यतां यातीति । तथा च रैभ्य —

यदि स्याद् गुणसंयुक्तो वक्ता वाक्यं च सद्गुणम्।
मूर्खो वा हास्यतां याति सभामध्ये प्रजल्पितम् ॥ १ ॥

अथ कृपणधनस्य स्वरूपमाह—

**किं मितंपचेषु धनेन चाण्डालसरसि वा जलेन यत्र सतामनुपभोगः ॥ १६ ॥**

टीका—मितं स्तोकं पचतीति मितंपचास्तेषु यद्धनं तेन किं प्रभूतेनापि । तथा चाण्डालसरसि अन्त्यजतडागे किं जलेन प्रभूतेनापि । यत्सतां साधूनां भोग्यं न भवति । तथा च नारद —

किं कीनाशधनेनात्र किमन्त्यजतडागजम्।
सलिलं यदि नो भोग्यं साधूनां संप्रजायते ॥ १ ॥

अथ लोकस्य स्वरूपमाह—

**लोको गतानुगतिको यतः सदुपदेशिनीमपि कुट्टिनीं तथा न प्रमाणयति यथा गोघ्नमपि ब्राह्मणम् ॥ १७ ॥**

टीका—योऽसौ जनो लोक । स किंविशिष्टः ? गतानुगतिकः । कोऽर्थः ? यदैकः पुमान् केनचिन्मार्गेण गच्छति शुभेनाशुभेन वा तदाऽन्योऽपि गच्छति । यदि कुट्टिनी वृद्धवेश्या सदुपदेशिनी भवति धर्मरता तदापि न कश्चित्प्रमाणयति प्रणमति वा । यदि पुनर्ब्राह्मणो गोहन्ता भवति तथापि लोकः पृच्छति प्रणमति च । तथा च गौतम —

> कुट्टिनी धर्मयुक्तापि यदि स्यादुपदेशिनी ।
> न च तां कोऽपि पृच्छेत जनो गोघ्नं द्विजं यथा ॥ १ ॥

इति विचारसमुद्देशः ।

## १६ व्यसनसमुद्देशः ।

अथ व्यसनसमुद्देशो व्याख्यायते । तत्रादावेव व्यसनस्वरूपं निरूपयन्नाह—

**व्यस्यति पुरुषं श्रेयस इति व्यसनम् ॥ १ ॥**

टीका—व्यस्यति प्रत्यावर्त्तयति इति व्यसनं । कं प्रत्यावर्त्तयति ? पुरुषं । कस्मात् ? श्रेयसः कल्याणात् । यदा पुरुष उत्तमस्थानादधमस्थानेषु भ्रमति तदा व्यसनमापन्नलक्षणम् । तथा च शुक्रः—

> उत्तमादधमं स्थानं यदा गच्छति मानवः ।
> तदा तद्व्यसनं ज्ञेयं बुधैस्तस्य निरन्तरम् ॥ १ ॥

अथ भूयोऽपि व्यसनस्वरूपमाह—

**व्यसनं द्विविधं सहजमाहार्यं च ॥ २ ॥**

अथ सहजं व्यसनं यथा नाशं नीयते तथाह—

सहजं व्यसनं धर्माभ्युदयहेतुभिरधर्मजनितमहाप्रत्यवायप्रतिपादनैरुपाख्यानैर्योगपुरुषैश्च प्रशमं नयेत् ॥ ३ ॥

टीका—प्रशमयेत् नाशयेत् । किं तत्? व्यसनं । किंविशिष्टं? सहजं स्वाभाविकं, कैः? धर्माभ्युदयहेतुभिर्धर्माभ्युदयकारणैः । धर्मकारणानि चिन्त्यानि अभ्युदयकारणानि च । ततो नाशं यान्ति । तथा अधर्मजनिता अधर्मसम्भूता ये महाप्रत्यवाया महादोषास्तेषां प्रतिपादनैर्निवेदनैः । अधर्मेण ये प्रत्यवाया भवन्ति तेषां प्रतिपादने सहजं व्यसनं नाशं याति । तथा आख्यानैस्तेषां प्रत्यवायानां वृत्तान्तैः, तथा योगपुरुषैरध्यात्मविद्भिः सह संयोगेन । तथा च गुरुः—

धर्मेणाभ्युदयो यस्य प्रत्यवायस्त्वधर्मतः ।
स श्रुत्वा सहजं याति व्यसनं योगिसङ्गतः ॥ १ ॥

अथ योगपुरुषलक्षणमाह—

परचित्तानुकूल्येन तदभिलषितेषूपायेन विरक्तिजननहेतवो योगपुरुषाः ॥ ४ ॥

टीका—ये योगपुरुषास्ते कीदृशा भवन्ति? ये व्यसनाभिभूतस्य इष्टे वस्तुनि यत्रार्थे व्यसने सेवाने तस्योपरि विरक्तिं जनयन्ति । केन कृत्वा? परचित्तानुकूल्येन परस्य व्यसनाभिभूतस्य यच्चित्तानुकूल्यं चित्तरञ्जनं तेन कृत्वा तस्योपरि ये विरक्तिं जनयन्ति ते योगपुरुषाः । तथा च हारीतः—

परचित्तानुकूल्येन विरक्तिं व्यसनात्मके ।
जनयन्तीष्टनाशेन ते ज्ञेया योगिनो नराः ॥ १ ॥

अथ हार्यव्यसनं यथा नाशं याति तदाह—

शिष्टजनसंसर्गदुर्जनासंसर्गाभ्यां पुरातनमहापुरुषचरितोत्थिताभिः कथाभिराहार्यं व्यसनं प्रतिबध्नीयात् ॥ ५ ॥

टीका—प्रतिविधीयात् नाशं नयेत्। किं तत् ? व्यसनं। किंविशिष्टं ? आहार्यं कृत्रिमं। काभ्यां ? शिष्टसंसर्गदुर्जनासंसर्गाभ्यां। यदा कृत्रिमव्यसनाभिभूतः पुरुषः शिष्टैः सह संसर्गं करोति तथा दुर्जनैः सह संसर्गं त्यजति तदा तद्व्यसनं नाशं याति। तथा पुरातनमहापुरुषचरितोत्थिताभिः कथाभिः श्रुताभिस्तद्व्यसनं याति। तथा च शुक्रः—

> आहार्यव्यसनं मद्योत्थसत्सङ्गेनाद्धिनाशनम्।
> महापुरुषवृत्तान्तैः श्रुतैश्चैव पुरातनैः॥ १॥

अथ स्त्रीव्यसनेनातिसेवितेन पुरुषो यथा भवति तदाह—

**स्त्रियमतिशयेन भजमानो भवत्यवश्यं तृतीयाप्रकृतिः॥ ६॥**

टीका—अतिशयेनात्यर्थं स्त्रियं भजमानः पुरुषो भवति। किंविशिष्टः ? तृतीयाप्रकृतिः वृद्ध इत्यर्थः। कथं वृद्धो भवति ? अतिशुक्रच्युतेः शीघ्रं वृद्धो भवति। एवं वृद्धत्वं न शिरःपलितेन। तथा धन्वन्तरिः—

> अकाले जरसा युक्तः पुरुषः स्त्रीनिषेवणात्।
> अथवा यक्ष्मणा युक्तस्तस्माद्युक्तं निषेवयेत्॥ १॥

अथ सौम्यधातुक्षयेण यद्भवति तदाह—

**सौम्यधातुक्षयेण सर्वधातुक्षयः॥ ७॥**

टीका—सौम्यधातुशब्देन सप्तमो धातुः शुक्रलक्षण उच्यते। तस्य क्षयेण ये अन्ये षड्धातवो रसरुधिरमांसमेदोऽस्थिमज्जास्नायुलक्षणास्ते सर्वे क्षयं यान्ति। तस्मात्तत्स्वभावेन यः शुक्रो वृद्धिं याति स मोक्तव्यः। नातिशक्तिं कृत्वा सर्वक्षयः कार्यः। तथा च वैद्यकः—

> सौम्यधातुक्षये पुंसां सर्वधातुक्षयो यतः।
> तस्मात्तं रक्षयेद् यत्नान्मूलोच्छेदं न कारयेत्॥ १॥
> सौम्यधातुबलात्सर्वे बलवन्तो हि धातवः।
> यं रक्षन्ति यतः सिद्धो लघुस्तुङ्गेन सोऽधिकः॥ २॥

अथ मद्यासक्तस्य यद्भवति तदाह—

**पानशौण्डश्चित्तविभ्रमान् मातरमपि गच्छति ॥ ८ ॥**

टीका—यः पुरुषः पानशौण्डो मद्यपो भवति स किं करोति ? मातरमपि जननीमपि गच्छति भजति। तथा च नारदः—

> यदा स्यान्मद्यमत्तस्तु कुलीनोऽपि पुमांस्तदा।
> मातरं भजते मोहात्तस्मात्तद्युक्तं निषेवयेत् ॥ १ ॥

अथातिमृगयासक्तस्य यद्भवति तदाह—

**मृगयासक्तिःस्तेनव्यालद्विषद्दायादानामामिषं पुरुषं करोति ॥ ९ ॥**

टीका—यासौ मृगयासक्तिराखेटकव्यसनं सा किं करोति ? पुरुषं मृगयासक्तमामिषं भक्ष्यस्थानं करोति विनाशयतीत्यर्थः। केषामामिषं ? स्तेनानां तस्कराणां तथा व्यालानां सिंहव्याघ्रादीनां तथा द्विषतां शत्रूणां तथा दायादानां गोत्रिकाणां तस्मात्तामपि शुक्र्या सेवेत नातिशयेन।
तथा च भारद्वाजः—

> मृगयाव्यसनोपेतः पुरुषो वधमाप्नुयात्।
> चौरव्यालारिदायादपार्श्वादेकतमस्य च ॥ १ ॥

अथ द्यूतासक्तस्य यदस्ति तदाह—

**द्यूतासक्तस्य किमप्यकृत्यं नास्ति ॥ १० ॥**

टीका—गतार्थमेतत्।

अथान्यदपि कितवः किं करोतीत्याह—

**मातर्यपि हि मृतायां दीव्यत्येव हि कितवः ॥ ११ ॥**

टीका—हि यस्मात्कारणाद्दीव्यति द्यूतक्रीडां करोति मृतायां परलोकगतायामपि। कस्यां ? मातरि जनन्यां। तस्मादकृत्यं नास्ति द्यूतासक्तस्य।
तथा च शुक्रः—

सानुरागोऽपि चेर्श्वावी पत्न्या स्पृशति कर्हिचित् ।
घृतविषेच्छते साधुर्वस्त्राहरणशङ्कया ॥ १ ॥

अथ पिशुनस्य यद्भवति तदाह—

**पिशुनः सर्वेषामविश्वासं जनयति ॥ १२ ॥**

टीका—जनयति करोति । कोऽसौ ? पिशुन राजाग्रे लोकच्छिद्रकथक । कं जनयति ? अविश्वास अविश्रम्भ । केषा ? सर्वेषा लोकाना । यो राजाग्रे पैशुन्य करोति स कस्यचिद्विश्वासस्थान न भवति कुलीनोऽपि । तथाच वसिष्ठ —

विद्वानपि कुलीनोऽपि राजाग्रे चेय पैशुनम् ।
य करोति नरो मूर्खस्तस्य कोऽपि न विश्वसेत् ॥ १ ॥

अथ दिवा स्वप्न य करोति तस्य यद्भवति तदाह—

**दिवास्वापः सुप्तव्याधिव्यालानामुत्थापनदण्डः सकलकार्यान्तरायश्च ॥ १३ ॥**

टीका—योऽसौ दिवास्वापो दिवाशयन स किंविशिष्ट ? सुप्तव्याधिव्यालानामुत्थापनदण्ड गुप्त प्रच्छन्न शरीरस्थो योऽसौ व्याधिस्तस्योत्थापनदण्ड प्रतिलक्षण । यथा व्यालाना सिंहव्याघ्रसर्पाणा उत्थापने दण्डो मृत्युलक्षण । तथा सकलकार्यान्तरायो विघ्नकरश्च । य पुमान् पुरुषो ग्रीष्मकाल मुक्त्वा दिवा शयन करोति स व्याधिव्यालानां प्रबोधन करोति यथा तथा दिवा शयनम् । तथा च धन्वन्तरि —

ग्रीष्मकाल परित्यज्य योऽन्यकाले दिवा स्वपेत् ।
तस्य रोगा प्रवर्द्धन्ते यैः स याति यमालयम् ॥ १ ॥

अथ परपरीवादेन यद्भवति तदाह—

**न परपरीवादात्परं सर्वविद्वेषणभेषजमस्ति ॥ १४ ॥**

टीका—न नियते किंचित् परीवादापर परेषां योऽसौ परीवादस्तस्माद-परं निर्द्वेषणभेषजं परेषामन्येषां याऽसौ निन्दा क्रियते तस्याः किञ्चिद् भेषजमौषधं नास्ति येन सा नाशं याति तस्या स्तुतिकरणमेकं भेषज-मौषधमस्ति । तथा च हारीत —

क्षयव्याधिपरीतस्य यथा नास्त्यत्र भेषजम् ।
परीवादप्रयोगस्य स्तुतिं मुक्त्वा न भेषजम् ॥ १ ॥

अथ तौर्यत्रयासक्तेर्यद्भवति तदाह—

**तौर्यत्रयासक्तिः प्राणार्थमानैर्वियोजयति ॥ १५ ॥**

टीका—तौर्यत्रयशब्देन गीतनृत्यवाद्यमुच्यते । तद्विषये याऽत्यासक्ति-र्व्यसनं तद्वियोजयति । कं ? पुरुषं । कैः ? प्राणार्थमानैस्तस्माद्दूरतस्त्यजेत् ।

अथ वृथाटनेन यद्भवति तदाह—

**वृथाट्या ना विधाय कमनर्थं विरमति ॥ १६ ॥**

टीका—न विरामं गच्छति । काम् ? वृथाट्या वृथाटनं । किं कृत्वा ? विधाय कृत्वा । कम् ? अनर्थं । किंविशिष्टं ? कमप्यपूर्वम् । तथा च भृगु —

वृथाटनं नरो योऽत्र कुरुते बुद्धिवर्जित ।
अनर्थं प्राप्नुयाद्रौद्रं यस्य चान्तो न लभ्यते ॥ १ ॥

अथातीर्ष्यायुक्तस्य पुरुषस्य यद्भवति तदाह—

**अतीर्ष्यालुं स्त्रियो घ्नन्ति त्यजन्ति वा पुरुषम् ॥ १७ ॥**

टीका—अतीर्ष्यायुक्तो यः पुमान् भवति स स्त्रीभिस्त्यज्यते वध्यते वा । तस्मादतीर्ष्या न कर्तव्या । तथा च भृगु —

ईर्ष्याधिकं त्यजन्ति स्म घ्नन्ति वा पुरुषं स्त्रियः ।
कुलोद्भूता अपि प्रायः किं पुनः कुकुलोद्भवाः ॥ १ ॥

अथ साहसस्य लक्षणमाह—

**परपरिग्रहाभिगमः कन्यादूषणं वा साहसम् ॥ १८ ॥**

टीका—परस्यान्यस्य योऽसौ परिग्रहः कलत्रलक्षणस्तस्याभिगमः प्राप्तिः परकलत्रहरणलक्षण इत्यर्थः । तथा कन्यादूषणं कन्यागमनं क्रियते तत्साहसं । इहलोके परलोके निर्भयत्वमित्यर्थः । तथाच भारद्वाजः—

> अन्यभार्यापहारो यस्तथा कन्याप्रदूषणम् ।
> तत्साहसं परिज्ञेयं लोकद्वयभयप्रदम् ॥ १ ॥

अथ तस्य साहसस्य दृष्टान्तमाह—

**यत्साहसं दशमुखदण्डिकाविनाशहेतुः सुप्रसिद्धमेव ॥ १९ ॥**

टीका—रामायणे पुराणे च कथितम् ।

अथ भूयोऽपि साहसलक्षणमाह—

**यत्र नाहमस्मीत्यध्यवसायस्तत्साहसम् ॥ २० ॥**

टीका—यत्र यस्मिन् कर्मणि प्रारब्धे रौद्रतमे नाहमस्मीत्यङ्गीकृत्य मरणं, पश्चादध्यवसाय क्रियते तदेव साहसम् । तथाच भृगुः—

> अङ्गीकृत्यात्मनो मृत्युं यत्कर्म क्रियते नरैः ।
> तत्साहसं परिज्ञेय रौद्रकर्मणि निर्भयम् ॥ १ ॥

अथार्थदूषणेन यद्भवति तदाह—

**अर्थदूषकः कुबेरोऽपि भवति भिक्षाभाजनम् ॥ २१ ॥**

टीका—यः पुरुषोऽर्थदूषको भवति अतिव्ययं करोति, अपात्रे च प्रयच्छति स इत्थंभूतो यदि स्यात्तदा कुबेरोऽपि धनदोऽपि भवति भिक्षाभाजनं दरिद्र इत्यर्थः । तथाच हारीतः—

> अतिव्ययं च योऽर्थस्य कुरुते कुत्सितं सदा ।
> दारिद्र्योपहतः स स्याद्धनदोऽपि न किं परः ॥ १ ॥

अथार्थदूषणस्य लक्षणमाह—

**अतिव्ययोऽपात्रव्ययश्चार्थदूषणम् ॥ २२ ॥**

टीका—पूर्वसूत्रे व्याख्यातमेतत् ।

अथाकारणरक्षस्य स्वरूपमाह—

**हर्षामर्षाभ्यामकारणं तृणाङ्कुरमपि नोपहन्यात्किंपुनर्मर्त्यम् ॥ २३ ॥**

टीका—नोपहन्यात् न व्यापादयेत् । किं तत् ? तृणाङ्कुरमपि । कथम् ? अकारणं प्रयोजनमन्तरेण । काभ्याम् ? हर्षामर्षाभ्यां हर्षशब्देनाहङ्कारः कथ्यते । अमर्षः कोपस्ताभ्यां कृत्वा किंपुनर्मर्त्यं मानवम् । तथा च भारद्वाजः—

तृणच्छेदोऽपि नो कार्यो विना कार्येण साधुभिः ।
येन नो सिद्ध्यते किञ्चित् किंपुनर्मानुषं सदम् (?)॥ १ ॥

**श्रूयते किल निष्कारणभूतावमानिनौ वातापिरिल्वलश्च द्वावसुरावगस्त्याशनाद्विनेशतुरिति ॥ २४ ॥**

टीका—एतयोर्वृत्तान्तो महाभारतादिपुराणेषु च ज्ञेयः ।

**यथादोषं कोटिरपि गृहीता न दुःखायते । अन्यायेन पुनस्तृणशलाकापि गृहीता प्रजाः खेदयति ॥ २५ ॥**

टीका—तथा च भागुरिः—

गृहीता नैव दुःखाय कोटिरप्यपराधिनः ।
अन्यायेन गृहीत यद्भूभुजा तृणमात्रिकम् ॥ १ ॥

अथ जनसर्वस्वहरणनृपस्य वृक्षच्छेदद्वारा तद्दोषं यद्भवति तदाह—

**तरुच्छेदेन फलोपभोगः सकृदेव ॥ २६ ॥**

टीका—यदा तरोर्मूलं छेद्यते ततस्तदा फलोपभोगः फलप्राप्तिस्तज्जाता सकृदेव एकवारं न द्वितीयम् । तथा राजापि यः सर्वस्वं कुटुम्बिनां हरति तावन्मात्रं स लाभस्तेषां पार्श्वात् नापरः । तथा च वल्लभदेवः—

मूलच्छेदे यथा नास्ति तत्फलस्य पुनस्तरोः ।
सर्वस्वहरणे तद्वन्नृपस्य तदुद्भवः ॥ १ ॥

अथ प्रजाना विभवो नृपस्य यथा भवति तदाह—

**प्रजाविभवो हि स्वामिनोऽद्वितीयो भाण्डागारोऽतो युक्तितस्तमुपभुञ्जीत ॥ २७ ॥**

टीका—प्रजानां विभवः स्वामिनोऽद्वितीयं भाण्डागारलक्षणं हि स्फुटं । अतोऽस्मात्कारणाद्युक्तितो न्यायेन तमुपभुञ्जीत अन्यायेन न गृह्णीयादित्यर्थः । तथा च गौतमः—

> प्रजानां विभवो यश्च सोऽपरः कोश एव हि ।
> नृपाणां युक्तितो ग्राह्यः सोऽन्यायेन न कर्हिचित् ॥ १ ॥

अथ राज्ञा द्रव्ये गृहीते यद्भवति तदाह—

**राजपरिगृहीतं तृणमपि काञ्चनं भवति जायते पूर्वसञ्चितस्याप्यर्थस्यापहाराय ॥ २७ ॥**

टीका—राजपरिगृहीतं तृणमपि चौर्येण गृहीतं काञ्चनं भवति सुवर्णं स्यात् । कथं ? यतः सञ्चितस्याप्यर्थस्यापहाराय नाशाय भवति । तस्मादूदूरतस्त्यजेत । तथाच गर्गः—

> यो हरेन्नृपजं वित्तमपि स्वल्पतरं हि यत् ।
> गृहस्थस्यापि वित्तस्य तन्नाशाय प्रजायते ॥ १ ॥

अथ वाक्पारुष्यलक्षणमाह—

**वाक्पारुष्यं शस्त्रपातादपि विशिष्यते ॥ २८ ॥**

टीका—विशिष्यते अधिकतरं भवति । किं तत् ? वाक्पारुष्यं निष्ठुरं वचनं प्रोक्तं । कस्माद्विशिष्यते ? शस्त्रपातादपि । तस्माद्वरं शस्त्रपातः कृत सुजनस्य न निष्ठुरं वचनं प्रोक्तम् । तथा च विदुरः—

> वाक्सायका रौद्रतमा भवन्ति यैराहतः शोचति रात्र्यहानि ।
> परस्य मर्मस्वपि ते पतन्ति तान् पण्डितो नैव क्षिपेत्परेषु ॥ १ ॥

अथ परुषवचनस्य लक्षणमाह—

**जातिवयोवृत्तविद्यादोषाणामनुचितं वचो वाक्पारुष्यम् ॥ २९ ॥**

टीका—यद्वचो वचनं अनुचितं अयोग्यं । केषां ? जातिवयोवृत्तविद्यादोषाणां तद्वाक्पारुष्यं । येन वचनेन जात्य कुलीनोऽकुलीनः कथ्यते, तथा विद्वान्मूर्खः कथ्यते, तथा अदोषो बहुदोषः कथ्यते, तत्पारुष्यम् । तथाच जैमिनिः —

> जातिपारुष्यविख्यातम् निर्दोषान्यस्तु भर्त्सयेत् ।
> तद्गुणर्यामता नीतेः पारुष्यं तस्य कारयेत् ॥ १ ॥

अथ स्त्रियमपत्यं भृत्यं च यथा विनयं ग्राहयेत्तथाह—

**स्त्रियमपत्यं भृत्यं च तथोक्त्वा विनयं ग्राहयेद्यथा हृदयप्रविष्टाच्छल्यादिव न ते दुर्मनायन्ते ॥ ३० ॥**

टीका—ग्राहयेद् ग्रहणयुक्तान् कारयेत् । कं ? विनयं । कां ? स्त्रियं भार्यां तथा अपत्यं तथा भृत्यं सेवकं त्रीण्येतानि विनयं ग्राहयितव्यानि, यथा सविनयानि भवन्ति तथा करणीयानि । यथा ते त्रयोऽपि पूर्वोक्ताः स्त्रीपुत्रभृत्या [illegible] दुर्मनायन्ते अन्यमनस्का न भवन्ति तथा कार्यम् । कस्मादिव ? शल्यादिव हृदयप्रविष्टात् । हृदयप्रविष्टे शल्ये यथा मनसि दुःखं भवति तथा ते न कर्तव्याः, यथा सानन्दा भवन्तीति । तथा च शुक्रः —

> भार्याभृत्यसुता यस्य वाक्पारुष्याद्दुःखिताः ।
> भवन्ति तस्य नो सौख्यं तेषां पार्श्वात्प्रजायते ॥ १ ॥

अथ दण्डपारुष्यमाह—

**वधः परिक्लेशोऽर्थहरणमक्रमेण दण्डपारुष्यम् ॥ ३१ ॥**

---

१ अत्र "जातिविद्यावृत्ताम्यान्" इतिपदं समीचीनं भाति ।

टीका—यदक्रमेणान्यायेन कस्यचिद्धन म्रियते, तथा क्लेशो गुप्ति[1]-पात अर्थग्रहण द्रव्यापहारस्तद्दण्डपारुष्यमुच्यते । तस्मात्तन्न कार्यमिति । तथा च गुरु —

वधः क्लेशापहारश्च प्रजाना कुरुते नृप ।
अन्यायेन हि तत्प्रोक्त दण्डपारुष्यमेव च ॥ १ ॥

अथ व्यसनोपहतस्य राज्ञो यद्भवति तदाह—

एकेनापि व्यसनेनोपहतश्चतुरङ्गोपि राजा विनश्यति किं पुनर्न सर्वैः[2] ॥

टीका—गतार्थमेतत् ।

इति व्यसनसमुद्देशः ।

## ११ स्वामिसमुद्देशः ।

अधुना स्वामिसमुद्देशो व्याख्यायते । तत्रादावेव स्वामिनो लक्षणमाह—

**धार्मिकः कुलाभिजनाचारविशुद्धः प्रतापवान्नयानुगतवृत्तिश्च स्वामी ॥ १ ॥**

टीका—य स्वामी राजा भवति स किंविशिष्ट । धार्मिकस्तावत् । तथा कुलाचाराभिजनविशुद्ध स्वकुले योऽसौ आचारो व्यवहारस्तेन यद-भिजनत्व कुलीनत्वं तेन विशुद्धो निर्मल तथा प्रतापवान् पूर्वपुण्यसम्पन्न ।

---

( १ ) गुप्ति कारागार भाषायां जेलखाना इति प्रसिद्ध ।

( २ ) पुस्तकान्तरे "अष्टादशभि " इति पाठ । तानि चैवं भवन्ति—१ कथासक्ति, २ मद्यपानं, ३ मृगया, ४ द्यूतं, ५ पैशुन्यं, ६ दिवास्वाप, ७ परपरिवाद, ८ गीतासक्ति, ९ नृत्यासक्ति, १० वादित्रासक्ति, ११ वृथाभ्रमणम्, १२ ईर्ष्यासूया, १३ साहस, १४ अर्थदूषणं, १५ वाक्पारुष्य, १६ द्रव्यहरणं, १७ वाक्पारुष्यं, १८ दण्डपारुष्यमिति प्रतिपादितानि चैवमेव ग्रन्थकर्त्रा ।

तथा नयानुगतवृत्तिः नयो नीतिस्तदनुगा तदनुयायिनी वृत्तिर्वर्तनं यस्येति । तथा च शुक्रः—

धार्मिको यः कुलाचारैर्विशुद्धः पुण्यवान्नयी ।
स स्वामी कुरुते राज्यं विशुद्धं राज्यकण्टकैः ॥ १ ॥

अथ भूयोऽपि स्वामिना यादृशेन भाव्यं तदाह—

**कोपप्रसादयोः स्वतन्त्रः ॥ २ ॥**

टीका—तथा यः स्वामी स्वतन्त्रः स्वायत्तः कस्यचिन्न परवशः । कयोः ? कोपप्रसादयोः । यः स्वमतेन कुपितः पापानां निग्रहं करोति तुष्टस्तु साधूनामुपकारं करोति स स्वामी प्रोच्यते । तथा च गर्गः—

स्वायत्तः कुरुते यश्च निग्रहानुग्रहौ जने ।
पापे साधुसमाचारे स स्वामी नेतरः स्मृतः ॥ १ ॥

अथ भूयोऽपि स्वामिलक्षणमाह—

**आत्मातिशयं धनं वा यस्यास्ति स स्वामी ॥ ३ ॥**

टीका—यस्यात्मातिशयं आत्ममानमस्ति धनं वा विद्यते स स्वामी । तथा च गुरुः—

आत्मा च विद्यते यस्य धनं वा विद्यते बहु ।
स स्वामी प्रोच्यते लोकैर्नेतरोऽत्र कथंचन ॥ १ ॥

अथ प्रकृतीनां स्वरूपमाह—

**स्वामिमूलाः सर्वाः प्रकृतयोऽभिप्रेतार्थयोजनाय भवन्ति नास्वामिकाः ॥ ४ ॥**

टीका—स्वामी मूलं आद्यं यासां ता स्वामिमूलाः । किमर्थं ? अभिप्रेतयोजनाय अभिप्रेता ये वाञ्छिताधिकारास्तेषु योजनाय अधिकारयोजनाय नास्वामिका न स्वामिरहितास्ताः स्वकीयमधिकारं लभन्ते । तथा च गर्गः—

स्वामिना विद्यमानेन स्वाधिकारानवाप्नुयात् ।
सर्वाः प्रकृतयो नैव विना तेन समाप्नुयुः ॥ १ ॥

अथाऽमूलानां प्रकृतीनां यद्भवति तदाह—

**उच्छिन्नमूलेषु तरुषु किं कुर्यात्पुरुषप्रयत्नः ॥ ५ ॥**

टीका—यदा उच्छिन्नमूला वृक्षा भवन्ति तदा तेषु किं कुर्यात् पुरुषप्रयत्नः ? पुरुषाणां प्रयत्नः पुष्पफलार्थं । एवं च स्वामिरहिते राज्ये किं कुर्यात्प्रकृतिपुरुषाणां स्वाधिकारार्थं प्रयत्नः । तथा च भागुरिः—

छिन्नमूलेषु वृक्षेषु यथा नो पल्लवादिकम् ।
तथा स्वामिविहीनानां प्रकृतीनां न वाञ्छितम् ॥ १ ॥

अथासत्यवादिनो यद्भवति तदाह—

**असत्यवादिनो नश्यन्ति सर्वे गुणाः ॥ ६ ॥**

टीका—असत्यवादिनः पुरुषस्य ये भवन्ति गुणाः शीलकुलविद्यादयस्ते सर्वे नश्यन्ति तस्मादसत्यं न ब्रूयात् । तथा च रैभ्यः—

कुलशीलोद्भवा ये च गुणा विद्यादयोऽपरा ।
ते सर्वे नाशमायान्ति य मिथ्यावचनात्मकाः ॥ १ ॥

अथ वञ्चकेषु यद्भवति तदाह—

**वञ्चकेषु न परिजनो नापि चिरायुः ॥ ७ ॥**

टीका—ये पुरुषाः परवञ्चका भवन्ति तेषां परिजनः परिग्रहो न भवति, तथा चिरायुश्चिरजीवित न स्यात् । तस्मात्परवञ्चनं न कार्यम् । तथा च भागुरिः—

यः पुमान् वञ्चनासक्तस्तस्य न स्यात्परिग्रहः ।
न चिरं जीवितं तस्मात्सद्भिस्त्याज्यं हि वञ्चनम् ॥ १ ॥

अथ यथा लोकस्य पुमान् प्रियो भवति तदाह—

**स प्रियो लोकानां योऽर्थं ददाति ॥ ८ ॥**

टीका—स पुरुष प्रिया वल्लभो भवति । केषा ? लोकाना । किंविशिष्टे ? यो ददाति । क ? अर्थे अल्पजोऽपि । तथा चात्रि —

> अल्पज्ञोऽपि च पापोऽपि लोकनाह्योऽपि निर्दय ।
> लोकाना वल्लभ सोऽत्र या ददाति निज धनम् ॥ १ ॥

अथ दातृस्वरूपमाह—

**स दाता महान् यस्य नास्ति प्रत्याशोपहत चेतः ॥ ९ ॥**

टीका—स दाता महाद्युत्तमो यस्य नास्ति । किं तत् ? चेत । किंविशिष्ट ? प्रत्याशोपहत, पुनस्तस्य पार्श्वाद्योऽसौ लाभस्तेन उपहत दूषितमिति । तथा च ऋषिपुत्रक —

> दत्त्वा दान पुनर्योऽत्र तस्माल्लाभ प्रवाञ्छति ।
> प्रगृहीतु सकाशाद्य तद्दान व्यर्थता व्रजेत् ॥ १ ॥

अथ प्रत्युपकारेण कृतेन यद्भवति तदाह—

**प्रत्युपकर्तुरुपकारः सवृद्धिकोऽर्थन्यास इव तज्जन्मान्तरेषु च न केषां ऋणं येषामप्रत्युपकारमनुभवनम् ॥ १० ॥**

टीका—प्रत्युपकर्तु सम्बन्धी य उपकार स कथभूत ? सवृद्धिकोऽर्थन्यास इव यावत्र प्रत्युपकार करोति कालान्तरेण वर्द्धते । येषामप्रत्युपकार प्रत्युपकाररहितमनुभनन । ये परोपकारमनुभवन्ति तेन ते तेषा तदृण जन्मान्तरेषु न जन्म प्राप्नुयात् ।

तथा च ऋषिपुत्रक —

> उपकार गृहीत्वा य प्रकरोति पुनर्नवा ।
> जन्मान्तरेषु तत्तस्य वृद्धिं याति कुसीदवत् ॥ १ ॥

**किं तया गवा या न क्षरति क्षीरम् ॥ ११ ॥**

**किं तेन प्रसादेन यो न पूरयत्याशाम् ॥ १२ ॥**

टीका—गतार्थमेतत्सूत्रद्वयम् ।

क्षुद्रपरिवारस्य नृपस्य यद्भवति तदाह—

क्षुद्रपरिषत्कः सर्पाश्रय इव न कस्यापि सेव्यः ॥ १३ ॥

टीका—परिषच्छब्देन सभा उच्यते तस्यां यस्य क्षुद्रा दुर्जना अमात्या भवन्ति तस्यां सभायां य उपविशति स राजा न कस्य सेव्यो भवति । क इव ? सर्पाश्रय इव । यत्र गृहे सर्पा भवन्ति तत्र यथा कोऽपि प्रवेशं न करोति तथा तस्यापि पार्श्वे न कोऽपि गच्छति। तथा च गुरुः—

> हंसाकारोऽपि चेद्राजा गृध्राकारैः सभासदैः ।
> असेव्यः स्यात्स लोकस्य ससर्प इव संश्रयः ॥ १ ॥

अथाकृतज्ञस्य नृपतेर्यद्भवति तदाह—

अकृतज्ञस्य व्यसनेषु न सहन्ते सहायाः ॥ १४ ॥

टीका—न सहन्ते न साहाय्यं कुर्वन्ति । के ते ? सहायाः प्रधान-सेवकाः । केषु ? व्यसनेषु आपत्कालेषु । कस्य ? अकृतज्ञस्य । यः कृतं न जानाति तस्य व्यसनेषु सहायाः सेवकाः सहायता न कुर्वन्ति तस्माल्कृत-ज्ञेन भूभुजा भाव्यम् ॥ तथा च जैमिनिः—

> अकृतज्ञस्य भूपस्य व्यसने समुपस्थिते ।
> साहाय्यं न करोत्येव कश्चिद्दासोऽपि मानवः ॥ १ ॥

अथाविशेषज्ञस्य नृपतेर्यद्भवति तदाह—

अविशेषज्ञो विशिष्टैर्नाश्रीयते ॥ १५ ॥

टीका—नाश्रीयते न सेव्यते । कैः ? विशिष्टैः साधुभिः । कोऽसौ ? अविशेषज्ञो राजा ॥ तथा च शुक्रः—

> काचं मणिं मणिं काचं यो वेत्ति पृथिवीपतिः ।
> सामान्योऽपि न तं सेवेत् किं पुनर्विबुधो जनः ॥ १ ॥

अथ कदर्यस्य राज्ञो यद्भवति तदाह—

**आत्मम्भरिः परित्यज्यते कलत्रेणापि ॥ १६ ॥**

टीका—परित्यज्यते । केन ? कलत्रेणापि । कोऽसौ ? आत्मम्भरि आत्मानं केवलं बिभर्ति पोषयति । यो न कस्यचित्किञ्चिद्ददाति स आत्मम्भरिः कथ्यते । तथा च गुरुः—

> उपार्जितं यो नो दद्यात्कस्यचिद्भक्षयेत्स्वयम् ।
> आत्मम्भरिः स विज्ञेयस्त्यज्यते भार्ययापि च ॥ १ ॥

अथानुत्साहस्य स्वरूपमाह—

**अनुत्साहः सर्वव्यसनानामागमनद्वारम् ॥ १७ ॥**

टीका—अनुत्साह आलस्योपहतिः स सर्वव्यसनानां सर्वापदां योऽसौ आगम आगतिस्तस्य द्वारं, तेन द्वारेण सर्वव्यसनानि, समापतन्ति । तथा च बादरायणः—

> आलस्योपहतो यस्तु पुरुषः सम्प्रजायते ।
> व्यसनानि न तं क्वापि सन्त्यजन्ति कथंचन ॥ १ ॥

अथोत्साहगुणानाह—

**शौर्यममर्षः शीघ्रकारिता सत्कर्मप्रवीणत्वमुत्साहगुणाः ॥ १८ ॥**

टीका—उत्साहः उद्यमस्तस्य तावच्छौर्यं गुणः, तथा अमर्षः परापकारे कृते कोपः, तथा शीघ्रकारिता सर्वेषु कर्मसु अमन्दता, तथा सत्कर्मप्रवीणत्वमिति सर्वे उत्साहगुणाः । तथा च शौनकः—

> शौर्यं कार्यार्थकोपश्च शीघ्रता सर्वकर्मसु ।
> सत्कर्मणि प्रवीणत्वमुत्साहस्य गुणाः स्मृताः ॥ १ ॥

अथान्यायप्रवृत्तस्य यद्भवति तदाह—

**अन्यायप्रवृत्तस्य न चिरं सम्पदो भवन्ति ॥ १९ ॥**

टीका—यः पुमानन्यायेन वर्त्तते तस्य चिरं प्रभूतकालं न सम्पदो लक्ष्म्यो भवन्ति। तथा चात्रिः—

अन्यायेन प्रवृत्तस्य न चिरं सन्ति सम्पदः।
अपि शौर्यसमेतस्य प्रभूतविभवस्य च॥ १॥

अथ स्वेच्छाचारिणः पुरुषस्य यद्भवति तदाह—

यत्किञ्चनकारी स्वैः परैर्वाभिहन्यते॥ २०॥

टीका—यत्किंचनकारी यः स्वेच्छया वर्त्तते न कमपि पृच्छति न कस्यचिद्वचनं शृणोति स हन्यते व्यापाद्यते। कैः? परैः शत्रुभिः स्वैर्वा पक्ष्यते। तथा चात्रिः—

स्वेच्छया वर्त्तते यस्तु न वृद्धान् परिपृच्छति।
स परैर्हन्यते नूनमात्मीयैर्वा निरङ्कुशः॥ १॥

अथैश्वर्यस्य स्वरूपमाह—

आज्ञाफलमैश्वर्यम्॥ २१॥

टीका—यदैश्वर्यं प्रभुता तस्य फलं। काऽसौ? आज्ञा आदेशो नान्यत्।
तथा च वल्लभदेवः—

स एव प्रोच्यते राजा यस्याज्ञा सर्वतः स्थिता।
अभिषेको व्रणस्यापि व्यजनं पट्टमेव च॥ १॥

अथ राज्ञः स्वरूपमाह—

राजाज्ञा हि सर्वेषामलङ्घ्यः प्राकारः॥ २२॥

टीका—योऽसौ राजा भवति स किंविशिष्टः? सर्वेषां मर्त्यानामलङ्घ्योऽनतिक्रमणीयः। क इव प्राकार इव। तथा च गुरुः—

अलङ्घ्यो यो भवेद्राजा प्राकार इव मानवैः।
यमादेशमसौ दद्यात् कार्यं एव हि स ध्रुवम्॥ १॥

अथ भूयोऽपि राजा यादृग् भवति तदाह—

आज्ञाभङ्गकारिणं पुत्रमपि न सहेत ॥ २३ ॥

टीका—न सहेत न क्षमेत। कं ? पुत्रमपि। किंविशिष्टं ? आज्ञाभङ्गकारिणं। य आज्ञाभङ्गं करोति स पुत्रोऽपि त्याज्यः। यतः आज्ञाप्रधानो राजा। तथा च नारदः—

आज्ञाभङ्गो नरेन्द्राणामशस्त्रो वध उच्यते।
प्राणार्थिभिर्न कर्त्तव्यस्तस्मात् सोऽत्र कथंचन ॥ १ ॥

भूयोऽपि भूपस्वरूपमाह—

कस्तस्य चित्रगतस्य च विशेषो यस्याज्ञा नास्ति ॥ २४ ॥

टीका—यस्य राज्ञ आज्ञाभङ्गो जनैः क्रियते तस्य चित्रगतस्य चित्रलेखितस्य च को विशेषः। यथा चित्रलिखितो राजा नाज्ञां प्रयच्छति तथा सोऽपि मन्तव्यः। तथा च गुरुः—

यस्याज्ञां नैव कुर्वन्ति भूमौ भूपस्य मानवाः।
आलेख्यगः स मन्तव्यो न मनुष्यः कथंचन ॥ १ ॥

अथ राजानरुद्धस्य यत्कर्त्तव्यं तदाह—

राजाज्ञावरुद्धस्य तदाज्ञां न भजेत् ॥ २५ ॥

टीका—न भजेत् न कारयेत्। काम् ? आज्ञामादेशं। कस्य ? राजावरुद्धस्य। यो राज्ञ आज्ञां न करोति तस्याज्ञा न कार्येति नीतिः। तथा च भारद्वाजः—

विरुद्धो वर्त्तते यस्तु भूपतेः सह मानवः।
तस्याज्ञां कुरुते यस्तु स दण्डार्हो भवेत्परः ॥ १ ॥

अथ पुरुषेण यत्कर्त्तव्यं तदाह—

परमर्माकार्यमश्रद्धेयं च न भाषेत ॥ २६ ॥

टीका—न भाषेत न वक्तव्यम् । किं तत् ? परमर्म परगुह्यं । कथं न भाषेत ? अकार्ये प्रयोजनरहितं तथा अश्रद्धेयं यत्र घटते इति । तथा च भागुरिः—

परमर्म न वक्तव्यं कार्ययाह्यं कथंचन ।
अश्रद्धेयं च विशेष च इच्छेद्धितमात्मनः ॥ १ ॥

विषमाचारमनभिजातं न भजेत् ॥ २७ ॥

अथ विकारिणि प्रभौ यद्भवति तदाह—

विकारिणि प्रभौ का नाम न विरज्यते ॥ २८ ॥

टीका—विकारिणि प्रभौ विकारयुक्ते स्वामिनि का नामाहो न विरज्येत न विरक्तिं करोति ? अपितु सर्वोऽपि जनो विरक्तो भवति। तस्मात्स्वामिना विकृतिर्न कार्या । यथा च हारीतः—

विकारान् कुरुते योऽत्र प्रकृत्या नैव तिष्ठति ।
प्रभोस्तस्य विरज्येत निजा अपि च बन्धवः ॥ १ ॥

अथाधर्मपरे राज्ञि यद्भवति तदाह—

अधर्मपरे राज्ञि को नाम नाधर्मपरः ॥ २९ ॥

टीका— यत्र राजा अधर्मपरो भवति तत्र को नामाऽपरोऽन्यो नाधर्मपरो भवति ? अपितु सर्वोऽपि जनः पापानुरक्तो भवति। तथा च व्यासः—

राज्ञि धर्मिणि धर्मिष्ठाः पापे पापाः समे समाः ।
राजानमनुवर्त्तन्ते यथा राजा तथा प्रजाः ॥ १ ॥

अथ राज्ञावज्ञातस्य यद्भवति तदाह—

राज्ञावज्ञातो यः स सर्वैरवज्ञायते ॥ ३० ॥

१ अस्य सूत्रस्य टीका नास्ति–मुद्रितपुस्तके "वपु समाचार माऽनभिजातं भजेत्" अपरे च "वेषमाचार मानभिजात न भजेत्" इति सूत्रम् ॥

टीका—राज्ञा यः पुरुषोऽनज्ञातो भवति स सर्वैरपि अवज्ञायते । तस्य न कोऽप्यादरं करोति । तथा च नारदः—

अवज्ञातस्तु यो राज्ञा स विद्वानपि मान्यते ।
अवज्ञायेत मूर्खोऽपि पूज्यते नृपपूजितः ॥ १ ॥

तमेव दृढयति—

**पूजितं पूजयन्ति लोकाः ॥ ३१ ॥**

टीका—गतार्थमेतत् ।

अथ राज्ञा यत्कर्त्तव्यं तदाह—

**प्रजाकार्यं स्वयमेव पश्येत् ॥ ३२ ॥**

टीका—यत्प्रजानां कार्यं प्रजाप्रयोजनं तत्स्वयं पश्येत् विचारयेत् । नान्यैः । यतोऽन्यैऽधिकृता उत्कोचया विचारयन्ति । तथा च देवलः—

ये स्युर्विचारका राज्ञामुत्कोचा प्राप्यतेऽन्यथा ।
विचारयन्ति कार्याणि तस्मात् नृपतेर्यतः ॥ १ ॥

तथा भूयोऽपि राज्ञा यत्कर्त्तव्यं तदाह—

**यथावसरमसङ्गं द्वारं कारयेत् ॥ ३३ ॥**

टीका—यथावसरं प्रस्तावमनतिक्रम्य कुर्यात् । किं तत् ? द्वारं राजद्वारं । किंविशिष्टं कुर्यात् ? असङ्गं यथा कश्चित्प्रविशति तथा कार्यम् । तथा च गर्गः—

मुख्यावसरमेकं च द्वारं गुप्तं प्रकारयेत् ।
प्रस्तावेऽपि परिज्ञातो न द्रष्टव्यो महीभुजा ॥ १ ॥

अथ दुर्दर्शस्य भूपतेर्यद्भवति तदाह—

**दुर्दर्शो हि राजा कार्याकार्यविपर्यासमासन्नैः कार्यते द्विषतामतिसन्धानीयश्च भवति ॥ ३४ ॥**

टीका—यो राजा केनाऽपि सह दर्शनं न करोति एकान्तशीलोऽस्ति तस्य कार्यते कार्यते । कं ? कार्याकार्यविपर्यासं व्यत्यय आसन्नैः । कैः ? सचिवाद्यैः । तस्माद्दर्शनं कार्यं । यथा च राजपुत्र —

शान्तिनं धनिनं दीनं योगिनं चार्तिसंयुतम् ।
द्वारस्थं य उपेक्षेत स श्रिया समुपेक्ष्यते ॥ १ ॥

न केवलं स राज्ञा कार्याकार्यविपर्यासं कार्यते, अपरमपि संधानीयो भवति सन्धानरहितो भवति । केषां ? रिपूणां शत्रूणां । ये तस्य शत्रवो भवन्ति ते सन्धानं तेन कृतं यत्पूर्वमासीत् तत्परित्यजन्ति । तथा च गर्गः —

स्त्रीसमासक्तचित्तो यः क्षितिपः संप्रजायते ।
वामतां सर्वकृत्येषु सचिवैर्नीयतेऽरिभिः ॥ १ ॥

अथ नियोगिना यथा जीवनोपायो भवति तदाह—

वैद्येषु श्रीमतां व्याधिवर्द्धनादिव नियोगिषु भर्तृव्यसनादपरो नास्ति जीवनोपायः ॥ ३५ ॥

टीका—नास्ति न विद्यते । कोऽसौ ? जीवनोपायः वर्तनं । किंविशिष्टः ? अपरोऽद्वितीयः । केषु ? नियोगिषु । केष्विव ? वैद्येष्विव । कस्मात् ? व्याधिवर्द्धनात् यथा जीवनोपायो वैद्यानां भवति तथा नियोगिनां स्वामिव्यसने वृद्धे जीवनोपायः । तथा च रैभ्यः —

ईश्वराणां यथा व्याधिर्वैद्यानां निधिरुत्तमः ।
नियोगिनां तथा ज्ञेयः स्वामिव्यसनसम्भवः ॥ १ ॥

अथ कार्यार्थिना विषये भूभुजा यत्कर्तव्यं तदाह—

कार्यार्थिनः पुरुषान् लञ्चलुञ्चानिशाचराणां भूतबलीन् कुर्यात् ॥ ३६ ॥

टीका—न कुर्यात् न विधीयेत पुरुषान् । किंविशिष्टान् ? कार्यार्थिनः समायातान् । केषां ? भूतबलीन् लञ्चलुञ्चानिशाचराणां लुञ्चकशब्देन उत्कोचः लुञ्चाशब्देन बलात्कारः एत एव निशाचरा राक्षसाः । एतदुक्तं भवति—ये भूतबलयो दीयन्ते ते काकादीनां दीयते न निशाचराणां । निशाचराणां दत्तैरेभिः श्रेयो न भवति एवं लञ्चलुञ्चादिभिः चाटैः कार्यार्थिनो ये गृह्यन्ते ते सामविर्तव्या भवन्ति राज्ञः कोशक्षितिर्भवति तस्मात्तैः सह दर्शनं कृत्वा कार्यसाधना स्वयं कर्त्तव्या । तथा च शुक्र—

कार्यार्थिनः समायातान् यश्च भूपो न पश्यति ।
स चाटैर्गृह्यते तेषां दत्त कोशो न जायते ॥ १ ॥

अथ लञ्चलुञ्चास्वरूपमाह—

**लञ्चलुञ्चा हि सर्वपातकानामागमनद्वारम् ॥ ३७ ॥**

टीका—योऽसौ लञ्चलुञ्चाव्यवहारः स हि स्फुटं सर्वपातकानां आगमनद्वारं स्यात्तत्र कार्ये । यतस्तद्द्वारेण सर्वपातकानि समागच्छन्ति । तथा च वशिष्ठ —

लञ्चलुञ्चानक्तो यस्य चाटकर्मरतो नरः ।
तस्मिन् सर्वाणि पापानि सश्रयन्तीह सर्वदा ॥ १ ॥

अथ लञ्चोपजीविनो यत्कुर्वन्ति तदाह—

**मातुः स्तनमपि लुञ्चन्ति लञ्चोपजीविनः ॥ ३८ ॥**

टीका—लञ्चोपजीविनो येऽत्र ते जनन्यास्तनमपि भक्षयन्ति काऽन्येषां कथा । तथा च भारद्वाज —

लञ्चोपजीविनो येऽत्र जनन्या अपि च स्तनम् ।
भक्षयन्ति सुनिस्त्रशा अन्यलोकस्य का कथा ॥ १ ॥

अथ लञ्चेन कार्यकारिभिः स्वामिनो यत् क्रियते तदाह—

**लञ्चेन कार्यकारिभिरूर्द्धः स्वामी विक्रीयते ॥ ३९ ॥**

टीका—निर्मीयते । परवशः क्रियते कोऽसौ ? स्वामी प्रभुः । कैः ? कार्यकारिभिः । केन कृत्वा ? लञ्चेन चाटुक्रियया । तथा च भृगुः—

लञ्चेन कर्मणा यत्र कार्यं कुर्वन्ति भूपतेः ।
निर्मितमपि चात्मानं नो जानाति स मूढधीः ॥ १ ॥

अथ लञ्चालाभेन या नृपस्य लाभो भवति तत्स्वरूपमाह—

**प्रासादध्वंसनेन लोहकीलकलाभ इव लञ्चेन राज्ञोऽर्थलाभः ॥४०॥**

टीका—यःऽर्थलाभो भवति । कस्य ? भूपतेः । केन कृत्वा ? लञ्चेन बलात्कारग्रहणेन । स किंविशिष्टो लाभः ? लोहकीलकलाभ इव । कस्मिन् कृते ? प्रासादविध्वंसने कृते । यथा लोहकीलकार्थं प्रासादविध्वंसः क्रियते एवं बलात्कारेण यो लाभः स तन्मात्रः । तथा च गर्गः—

लञ्चद्वारेण यो लाभो भूमिपानां स कीदृशः ।
लोहकीलकलाभस्तु यथा प्रासादध्वंसने ॥ १ ॥

अथ लञ्चेन कर्मणा कृतेन राज्ञो यद्भवति तदाह—

**राज्ञो लञ्चेन कार्यकरणे कस्य नाम कल्याणम् ॥४१॥**

टीका—नामाहो कस्य कल्याणं शुभं भवति । कस्मिन् ? लञ्चेन कार्यकरणे बलात्कारेण हरणे कस्य राज्ञो भूपस्य समुपा किमपि केऽपि यदि बलात्कारं करोति तत्कल्याणं न भवति । तथाच भागुरिः—

लञ्चनद्वारमाश्रित्य यो राजोऽत्यधनं हरेत् ।
न तस्य किञ्चित् कल्याणं कदाचित्संप्रजायते ॥ १ ॥

अथ राजापि लुब्धद्वारेण वित्तमुपार्जयति तदा यद्भवति तदाह—

**देवतापि यदि चौरेषु मिलति कुतः प्रजानां कुशलम् ॥४२॥**

टीका—देवता दुर्गापि सा चौराणां मिलति साहाय्यं करोति, तदा प्रजानां कुतः कल्याणं क्षेमं न कस्मादपि भवतीत्यर्थः । एवं यदा राजापि लञ्चासक्तो भवति तदा प्रजानां कुतः कल्याणं स्यात् । तथा चात्रि—

राज्ञो लुब्धाप्रवृत्तस्य कीदृक् स्याज्जनतासुखम् ।
यथा दुर्गप्रसादेन चौरोपरि कृतेन च ॥ १ ॥

अथ लुब्धेनार्थदर्शनेन यद्भवति तदाह—

**लुब्धेनार्थोपाश्रयं दर्शयत् देशं कोशं मित्रं तन्त्रं च भक्षयति ।४३।**

टीका—लुब्धेन यो राजाऽर्थोपाश्रयं दर्शयति स किंकरोति ? नाशं नयति । कं ? देशं कोशं भाण्डागारं तथा मित्रमिष्टं च तथा तन्त्रं सैन्यं सर्वमेतन्नाशयति । तस्माल्लुब्धार्थदर्शनं न कार्यमिति । तथाच भागुरि —

दर्शनं लुब्धनार्थस्य य: करोति महीपति: ।
स देशकोपमित्राणां तन्त्रस्य च क्षयकर: ॥ १ ॥

अथ राज्ञोऽन्यायकरणस्य यद्भवति तदाह—

**राज्ञोऽन्यायकरणं समुद्रस्य मर्यादालङ्घनमादित्यस्य तमःपोषणं मातुश्चापत्यभक्षणमिति कलिकालविजृंभितानि ॥ ४४ ॥**

टीका—राजा कलिकालकृतस्य च कारणम् ।

अथ न्यायतः परिपालके राज्ञि प्रजानां यद्भवति तदाह—

**न्यायतः परिपालके राज्ञि प्रजानां कामदुघा भवन्ति सर्वा दिशः ॥ ४५ ॥**

टीका—यदि राजा न्यायेन परिपालनं करोति तत्प्रजानां सर्वा दिशः कामदुघा भवन्ति । कथं कृषिवाणिज्यकुसीदकरणादिभिः सर्वलोकः सर्वासु दिक्षु वाञ्छितं प्राप्नोतीत्यर्थः । तथाच—

राज्ञि चिन्तापरे देशे स्वार्थसिद्धिः प्रजायते ।
क्षेमेण कर्षकाः सस्यं प्राप्नुयुर्धनिनो धनम् ॥ १ ॥

अथान्यदपि यद्भवति तदाह—

**काले वर्षति मघवान्, सर्वाश्चेतयः प्रशाम्यन्ति, राजानमनुवर्तन्ते सर्वेऽपि लोकपालाः ॥ ४६ ॥**

टीका—ये लोकपालाः शक्रप्रभृतयस्ते राजानमनुवर्तन्ते। यदि राजा परिपालको भवति तल्लोकपाला अपि तस्य राष्ट्रं वृष्ट्यादिभिः प्रजास्तैर्स्वं कुर्वन्ति। यदि पुनः राजा दण्डादिभिः पीडयति। तथा च गुरुः—

> इन्द्रादिलोकपाला ये पार्थिवे परिपालके।
> पालयन्ति च तद्राष्ट्रं वामे वामं च कुर्वते ॥ १ ॥

अथ राजा मध्यमोऽप्युत्तमो येन भवति तदाह—

**तेन मध्यममप्युत्तमं लोकपालं राजानमाहुः ॥ ४७ ॥**

टीका—तेन कारणेनाहुः कथयन्तिस्म। के ? जना लोकाः। कं ? राजानं। किंविशिष्टं ? उत्तमं। किंविशिष्टमपि ? मध्यममपि। कथंभूतं ? लोकपालं प्रजारक्षणतत्परम्। तथा च रैभ्यः—

> लक्ष्म्यादिभिस्तो राजा मध्यमोऽप्यत्र मानवे।
> श्लाघ्यते यस्तु लोकानां सम्यक्स्यात्परिपालकः ॥ १ ॥

अथ राज्ञा लोकस्य यत्कर्तव्यं तदाह—

**अव्यसनेन क्षीणधनान् मूलधनप्रदानेन सम्भावयेत् ॥ ४८ ॥**

टीका—उद्धारकवित्तप्रदानेन। तथा च शुक्रः—

> प्रतिकं च शतं वृद्ध्या देयं राज्ञा कुटुम्बिने।
> सीदमानाय नो देयं द्यूताद्यैर्निर्धनाय च ॥ १ ॥

अथ राज्ञो पृथिवी यादृशी भवति तदाह—

**राज्ञो हि समुद्रावधिर्मही कुटुम्बं, कलत्राणि च वंशवर्द्धनक्षेत्राणि ४९**

टीका—गतार्थमेतत्।

अथ राज्ञार्थिना यत्कृत्यं तदाह—

**अर्थिनामुपायनमप्रतिकुर्वाणो न गृह्णीयात् ॥ ५० ॥**

टीका—न गृह्णीयात् तेषां यदि कार्यार्थिनां कार्यं न साधयति। असिद्धे च तस्मिन् ढौकनीयं तेषामर्पणीयमिति। तथा च नारदः—

उपायेन न गृह्णायाद्यदि कार्यं न साधयेत् ।
आर्थिना पृथ्यापालो नो चेद्यानि स घात्यताम् ॥ १ ॥

अथान्यदपि राज्ञा यत्कर्त्तव्य तदाह—

आगन्तुकैरसहनैश्च सह नर्म न कुर्यात् ॥ ५१ ॥

टीका—न कुर्यात् न कर्त्तव्य । किं ? नर्म हास्य । कथं ? सह सार्द्धं । कै ? आगन्तुकैर्यादै , तथा असहनैर्ये नर्म क्रीनं न सहन्ते । तथा च शौनक —

हास्यकेलिं न कुर्वीत भूप सार्द्धं समागते ।
ये चापि न सहन्तेऽस्य दोषोऽत्र हि यतोऽपर ॥ १ ॥

अथ भूयोऽपि राज्ञो यत्कर्त्तव्य तदाह—

पूज्यैः सह नाधिक वदेत् ॥ ५२ ॥

टीका—पूज्यैर्नमस्यै सह न अधिक वदेत् न विवाद कुर्यात् । तथा च शुक्र —

पूज्यै सह विवाद य कुरुते मतिवर्जित ।
स निन्दा लभते लोके परत्र नरक व्रजेत् ॥ १ ॥

अथ भूभुजा भूयोऽपि यत्कर्त्तव्य तदाह—

भर्तुमशक्यमप्रयोजन च जन नाशया परिक्लेशयेत् ॥ ५३ ॥

टीका—न परिक्लेशयेत् न कष्टभाव कुर्यात् । क ? अप्रयोजनं कार्यरहित । क ? जनम् लोक । किंविशिष्ट ? अशक्य । किं कर्तुं ? भर्तुं पोषयितु पुष्टिं नेतु । यो जनो भर्तुं न शक्यते तमाशया व्यर्थया प्रयोजनवाह्य न क्लेशयेदिति । तथा च शुक्र —

पुष्टिं नेतु न शक्येत यो जन पृथिवीभुजा ।
वृथाशया न सक्लश्यो विशेषाद्वि प्रयोजन ॥ १ ॥

अथ पुरुषस्य पुरुषो यथा दासो न भवति तदाह—

**पुरुषस्य पुरुषो न दासः किन्तु धनस्य ॥ ५४ ॥**

टीका—यत्पुरुषस्य पुरुषो दासो भृत्यतां गच्छति सामान्यहस्तपादादिगात्रैर्भिन्नस्तस्य तस्य दासः किन्तु धनस्य दासतां याति तेनैव निर्लोहो भवति । तथा च गुरुः—

> पुमान् सामान्यगात्रोऽपि न चान्यस्य स कर्मकृत् ।
> यत्करोति पुनः कर्म दासवत्तद्धनस्य च ॥ १ ॥

अथ धनहीनः पुमान्यथा भवति तदाह—

**को नाम धनहीनो न भवेल्लघुः ॥ ५५ ॥**

टीका—नाम अहो को न स्यात् लघुर्लघुतायुक्तः । किंविशिष्टः ? धनहीनो विभवरहितः । तथा च कालिदासः—

> रिक्तः सर्वो भवति हि लघुः पूर्णता गौरवाय ।

अथ विद्याधनस्य माहात्म्यमाह—

**सर्वधनेषु विद्यैव धनं प्रधानमहार्यत्वात्सहानुयायित्वाच्च ॥ ५६ ॥**

टीका—सर्वेषां धनानां सुवर्णादीनां प्रधानमुत्तमं । किं तत् ? विद्याधनम् । कस्मात् ? अहार्यत्वात् । कैः ? चौरादिभिः, तथा सहानुयायित्वाच्च सहगमनात् । यो येन शताद्यपि यत्नेन तथा चौरादयोऽपहरन्ति* । तथा मृतस्य गृहे न तिष्ठति तस्माद्विद्याधनं कार्यं । तथा च नारदः—

> धनानामेव सर्वेषां विद्या धनमनुत्तमम् ।
> ह्रियते यन्न केनापि प्रस्थितेन समं व्रजेत् ॥ १ ॥

अथ भूयोऽपि विद्यामाहात्म्यमाह—

**सरित्समुद्रमिव नीचोपगतापि विद्या दुर्दर्शमपि राजानं संगमयति ॥ ५७ ॥**

---

* " यत्सुवर्णादिधनं तच्चौराद्याऽपहरति " इति शुद्धं प्रतीयते ।

टीका—कथित ? सरित्समुद्रमिव। यथा सरिन्नदी नीचमार्गोपगतापि समुद्रसंगं प्राप्नोति, तथा नीचादपि उपार्जिता विद्या दुर्दर्शनेनापि राज्ञा सह दर्शनं कारयति। तथा च गुरु —

नीचादपि च यो विद्यां प्राप्नुयाद्बुद्धिमान्नरः।
दुर्दर्शमपि राजानं सत्प्रभावास्स पश्यति ॥ १ ॥

अथ राज्ञा सह दर्शनेन विज्ञस्यापि यद्भवति तदाह—

परन्तु भाग्यानां व्यापारः ॥ ५८ ॥

टीका—राज्ञा सह दर्शने जाते परन्तु भाग्यानां पुण्यानां तस्य विज्ञस्य व्यापारो व्यवसाय। यदि तस्य विज्ञस्य भाग्य पूर्वकृतं सुकृतं भवति ततः प्रभूतलाभो भवति। अशुभं वा स्यात्तत किंचिद्भवति तत्र विषये विद्यायाः प्रभुत्वम्। तथा च गुरु —

दुर्दर्शमपि राजानं विद्या दर्शयति ध्रुवम्।
आत्मप्रभावतो लोके तस्य भाग्यानि केवलम् ॥ १ ॥

अथ भूयोऽपि विद्याया माहात्म्यमाह—

सा खलु विद्या विदुषां कामधेनुर्यतो भवति समस्तजगत्स्थितिपरिज्ञानम् ॥ ५९ ॥

टीका—सा विद्या खलु निश्चयेन कामधेनुर्भवति। केषां ? विदुषां। तस्या यतो भवेत् समस्तजगत्स्थितिपरिज्ञानं सर्वस्मिन्नपि जगति स्थितिः स्थानं भवति, तथा परिज्ञानं भवति। तथा च शुक्र —

विद्या कामदुघा धेनुर्विज्ञान सप्रजायते।
यतस्तस्या प्रभावेन पूज्या स्यु सर्वतो दिशः ॥ १ ॥

अथ लोकव्यवहारज्ञस्य यद्भवति तदाह—

लोकव्यवहारज्ञो हि सर्वज्ञोऽन्यस्तु प्राज्ञोऽप्यवज्ञायत एव ६०

टीका—लोकव्यवहारज्ञो यो लोकव्यवहारं जानाति स मन्दमतिरपि सर्वज्ञकल्पो भवति । यस्तु पुनरन्यो लोकव्यवहारं न जानाति स प्राज्ञोऽपि पण्डितोऽप्यवज्ञायते अवज्ञां लभते जनात् । तथा च नारदः—

> लोकानां व्यवहारं यो विजानाति स पण्डितः ।
> मूर्खोऽपि योऽथवान्यस्तु स विज्ञोऽपि यथा जडः ॥ १ ॥

अथ प्रज्ञापारङ्गतानां लक्षणमाह—

**ते खलु प्रज्ञापारमिताः पुरुषा ये कुर्वन्ति परेषां प्रतिबोधनम् ॥ ६१ ॥**

टीका—पुरुषा इता गता खलु निश्चयेन । कं ? प्रज्ञापारं मतिपर्यन्तं ये कुर्वन्ति प्रतिबोधनं । केषां ? परेषामन्येषाम् । तथा च जैमिनिः—

> अथ विज्ञाः प्रकुर्वन्ति येऽन्येषां प्रतिबोधनम् ।
> सर्वज्ञास्ते परे मूर्खा यतः स्युर्धनदर्पयत् ॥ १ ॥

अथ ये प्रतिबोधं न जनयन्ति विज्ञास्तानुद्दिश्याह—

**अनुपयोगिना किं महत्यपि जलनिधिजलेन ॥ ६२ ॥**

टीका—जलनिधिजलेन समुद्रोदकेन महतापि प्रभूतेनापि किं तेनानुपयोगिना अपेयेन । एवं प्रभूतयाविद्यया किं तया यथाऽन्येषां प्रतिबोधो न क्रियते । तथा च शुक्रः—

> किं तया विद्यया कार्यं या न बोधयते परान् ।
> प्रभूतैश्चापि किं तोयैर्जलधेर्यैर्गतैः ॥ १ ॥

इति स्वामिसमुद्देशः ।

---

## १८ अमात्यसमुद्देशः ।

अथामात्यसमुद्देशो व्याख्यायते । तत्रादावेवामात्यमाहात्म्यमाह—

**चतुरङ्गेऽस्ति द्यूते नानमात्योऽपि राजा किं पुनरन्यः ॥ १ ॥**

टीका—नास्ति न विद्यते । कोऽसौ ? राजा । किंविशिष्टः ? अनमात्यः, अमात्यवर्जितः । क ? चतुरङ्गे द्यूतेऽपि किम्पुनरन्यः पृथिवीपतिः । तथा च गुरुः —

> चतुरङ्गेऽपि नो द्यूते मन्त्रिणा परिवर्जितः ।
> स्वराज्यं कर्तुमीशः स्यात्किंपुनः पृथिवीपतिः ॥ १ ॥

अथ मन्त्रिरहितस्य राज्ञो यद्भवति तदाह—

**नैकस्य कार्यसिद्धिरस्ति ॥ २ ॥**

**न ह्येकं चक्रं परिभ्रमति ॥ ३ ॥**

टीका—गतार्थमेतत्सूत्रद्वयम् ।

**किमवातः सेन्धनोऽपि वह्निर्ज्वलति ॥ ४ ॥**

टीका—वह्निः वैश्वानरः किं ज्वलति अपि तु न ज्वलति । किंविशिष्टः ? सेन्धनोऽपि । पुनरपि कथम्भूतः ? अवातो वातरहितः । एवं राजापि मन्त्रिरहितो राज्यं कर्तुं न शक्नोति । तथा च वल्लभदेवः —

> किं करोति समर्थोऽपि राजा मन्त्रिविवर्जितः ।
> प्रदीप्तोऽपि यथा वह्निः समीरणविना कृतः ॥ १ ॥

अथामात्यानां लक्षणमाह—

**स्वकर्मोत्कर्षापकर्षयोर्दानमानाभ्यां सहोत्पत्तिविपत्ती येषां तेऽमात्याः ॥ ५ ॥**

टीका—दानमानाभ्यां कयोः ? स्वकर्मोत्कर्षापकर्षयोः स्वकर्मणि योऽ-

सौ उत्कर्षे उत्साहस्तथा योऽपकर्षो निरागता तयोर्विषये सह दानमानाभ्यां लाभालाभौ भवत । तथा च शुक्र —

> अप्रसादे प्रसादे च येषां च समता स्थिति ।
> अमात्यास्ते हि विज्ञेया भूमिपालस्य सम्मता ॥ १ ॥

अमात्याना येऽधिकारा भवन्ति तदाह—

**आयो व्ययः स्वामिरक्षा तन्त्रपोषण चामात्यानामधिकारः॥६॥**

टीका—अमात्याना मन्त्रिणा एते चत्वारोऽधिकारा भवन्ति । आय स्यागतिरर्थस्य, तथा व्ययो यत्किञ्चित्कस्यचिद्दीयते, तथा स्वामिरक्षा राजपरिपालन, तथा तन्त्रपोषण तन्त्रशब्देन हस्त्यश्वप्रभृत्यादि तस्य पोषण पुष्टिकरणम् । तथा च शुक्र —

> आगतिर्व्ययसयुक्ता तथा स्वामिप्ररक्षणम् ।
> तन्त्रस्य पोषण कार्य मन्त्रिभि सर्वदैव हि ॥ १ ॥

अथायव्ययमुखयोर्निदर्शनमाह—

**आयव्ययमुखयोर्मुनिकमण्डलुर्निदर्शनम् ॥ ७ ॥**

टीका—निदर्शनं दृष्टान्त । कयो [१] आयव्ययमुखयो आगतेर्विना (?) आगामी मुख व्ययस्य त्यागादिक मुख तयोर्निदर्शन मुनिकमण्डलु क्षपणकोदकपात्र यथा हेलया पूर्यते शनैर्व्ययेत् । तथा च गुरु —

> आयोऽत्रस्यतर कार्यो व्ययाधित्यश्च मन्त्रिभि ।
> विपरीतो व्ययो यस्य स राज्यस्य विनाशक ॥ १ ॥

अथायव्ययस्य मुखम् ।

**आयस्य द्रव्योत्पत्तिर्मुखम् ॥ ८ ॥**

टीका—आय आगति । स किंविशिष्ट [२] द्रव्योत्पत्तिर्मुखं । गतार्थमेतत् ।

अथ व्ययस्य मुखमाह—

**यथा स्वामिशासनमर्थस्य विनियोगो व्ययः ॥ ९ ॥**

अथानालोक्यागतिं यो व्ययं करोति तस्य यद्भवति तदाह—

**आयमनालोच्य व्ययमानो वैश्रवणोऽप्यवश्यं श्रमणायते ॥ १० ॥**

टीका—श्रमणायते निर्ग्रन्थो भवति। कोऽसौ ? वैश्रवणोऽपि धनदोऽपि श्रमणं इवाचरति क्षपणकसदृशो भवति। किं कुर्वाणः ? व्ययमानः व्ययं कुर्वन्। किं कृत्वा ? आयं द्रव्योत्पत्तिमुखं अनालोच्याविचार्य। अयमर्थः—धनदोऽपि भिक्षुको भवति किं पुनः स्वल्पधनः पार्थिवजनः। तथा च शुक्रः—

आगमे यस्य चत्वारि व्यये चैवार्द्धपञ्च च।
कुबेरोऽपि भवेन्नून निर्धनः किंतु भूपतिः ॥ १ ॥

अथ स्वामिशब्दस्य लक्षणमाह—

**राज्ञः शरीरं धर्मः कलत्रं अपत्यानि च स्वामिशब्दार्थः ॥ ११ ॥**

टीका—एते चत्वारः पदार्थाः स्वामिशब्दं लभन्ते। एकं तावत् राज्ञः शरीरं, तथा धर्मः, तथा कलत्रं, तथा अपत्यानि। गतार्थमेतत्।

अथ तन्त्रस्य स्वरूपमाह—

**तन्त्रं चतुरङ्गबलम् ॥ १२ ॥**

टीका—गतार्थमेतत्।

अथामात्यनिषेधमाह—

**तीक्ष्णं बलवत्पक्षमशुचिं व्यसनिनमशुद्धाभिजनमशक्यप्रत्यावर्त्तनमतिव्ययशीलमन्यदेशायातमतिचिक्कणं चामात्यं न कुर्वीत ॥१३॥**

टीका—तीक्ष्णमतिकोपनं, तथाऽशुचिमपवित्रं, व्यसनिनं व्यसनाभिभूतं अशुद्धाभिजनमकुलीनं, तथा शक्यप्रत्यावर्त्तनमेकाग्रहिकं, तथातिव्यय-

शीलं व्ययाधिकं, तथान्यदेशायातं परदेशागतं, तथा चिक्कणं कृपणं, ईदृशममात्यं भूपतिर्न कुर्यात् । एतेषामष्टदोषाणामेकेनापि यो युक्तः । तथा च शुक्रः—

तीक्ष्णं क्षुद्रं दुराचारमकुलीनं विदेशजम् ।
एकग्राहं व्ययप्रायं कृपणं मन्त्रिणं त्यजेत् ॥ १ ॥

अतितीक्ष्णप्रकृतयो मन्त्रिणो यादृशा भवन्ति तदाह—

**तीक्ष्णोऽभियुक्तो म्रियते मारयति वा स्वामिनम् ॥ १४ ॥**

टीका—तीक्ष्णो मन्त्री अपराधे कृते अभियुक्तो निगृहीतो म्रियते स्वयं । वा अथवा मारयति स्वामिनम् । अशुचि स्पर्शेन दूषयति । व्यसनी कार्याकार्यं न विन्दति । अकुलीनो विक्रियां गच्छति । अशक्य-प्रत्यावर्तनो न कथंचिद्बुध्यते । अतिव्ययशीलः स्वार्थत्रुटौ राजवित्तं भक्षयति । अन्यदेशायातः स्थैर्यं न बध्नाति । चिक्कणः कश्चिदपि प्रत्युप-कारं न करोति ।

अथ बलवत्पक्षमन्त्रिणा कृतेन यद्भवति तदाह—

**बलवत्पक्षो नियोगाभियुक्तः कल्लोल इव समूलं नृपाङ्घ्रिप-मुन्मूलयति ॥ १५ ॥**

टीका—उन्मूलयति विनाशं नयति । कोऽसौ ? मन्त्री । किंविशिष्टः ? नियोगाभियुक्तः मन्त्रिपदे स्थापितः । पुनरपि कथंभूतः ? बलवत्पक्षः बलवान् पक्षो मातृकः पैतृकश्च यस्य स प्रभूतपुरुष इत्यर्थः । स मन्त्री इत्थम्भूतः उन्मूलयति । कं ? नृपाङ्घ्रिपं पार्थिववृक्षं । अङ्घ्रिपशब्देन वृक्षस्य जटाः कथ्यन्ते ताः परिपालयति यस्तस्मादङ्घ्रिपो वृक्षः कथ्यते । क इव ? बलवान् कल्लोल इव । यथा कल्लोलस्तरङ्गो नदीतटस्थं वृक्षं

समूलमुत्पाटयति तथा सचिवोऽपि बलवत्पक्षः पार्थिवमुन्मूलयति। तथा च शुक्रः—

> यत्नवत्पक्षभाग्मन्त्री उन्मूलयति पार्थिवम्।
> कल्लोलो यत्नवान् यद्वत्तटस्थं च महीरुहम्॥ १॥

अथाल्पायेन महाव्ययेन मन्त्रिणा कृतेन यद्भवति तदाह—

**अल्पायतिर्महाव्ययो भक्षयति राजार्थम्॥ १६॥**

टीका—यो मन्त्री अल्पायतिरल्पलाभो भवति महाव्ययं करोति स भक्षयति। कं? राजार्थं। तस्माद्भूभुजा अल्पायतिर्महाव्ययो मन्त्री न कर्तव्यः। तथा च गुरुः—

> मन्त्रिणं कुरुते यस्तु स्वल्पलाभं महाव्ययम्।
> आत्मवित्तस्य भक्षार्थं स करोति न संशयः॥ १॥

अल्पायमुखेन मन्त्रिणा कृतेन यद्भवति तदाह—

**अल्पायमुखो जनपदपरिग्रहौ पीडयति॥ १७॥**

टीका—यो मन्त्री अल्पायमुखः स्वल्पागमः स पीडयति। कौ? जनपदपरिग्रहौ। तस्मादल्पायमुखो मन्त्री न कर्तव्यः। तथा च गर्गः—

> अल्पायमुखमेवात्र मन्त्रिणं प्रकरोति यः।
> तस्य राष्ट्रं क्षयं याति तथा चैव परिग्रहः॥ १॥

अथागन्तुकानां सेवकानां भूभुजा यत्कर्तव्यं तदाह—

**नागन्तुकेष्वर्थाधिकारः प्राणाधिकारो वा देयः॥ १८॥**

टीका—न देयो न दातव्यः। कोऽसौ? अर्थाधिकारः अर्थोत्पत्तिस्थानं तथा प्राणाधिकारः अङ्गरक्षणम्, अन्यदेशागतेषु न देयः। तथा च शुक्रः—

> अन्यदेशागतानां च योऽधिकारं धनोद्भवम्।
> ददाति गात्ररक्षां वा सोऽर्थप्राणैर्वियुज्यते॥ १॥

अथ स्वदेशजानामर्थाधिकारे प्रदत्ते यद्भवति तदाह—

**स्वदेशजेष्वर्थः कूपपतित इव कालान्तरादपि लब्धुं शक्यते ॥१९॥**

टीका—स्वदेशजः पुरुषोऽर्थाधिकारी तेन योऽर्थो गृहीतः स लब्धुं शक्य। कस्मात्? कालान्तरादपि। कथंभूत इव? पतित इव। कस्मिन्? कूपे। यथा कूपे पतितोऽर्थः कालान्तरेण लभ्यते तथा स्वदेशजाधिकारिणा गृहीतोऽर्थो नाशं न याति। तस्मात्स्वदेशजोऽधिकारी कार्यः। तथा च नारदः—

> अर्थाधिकारिणं राजा यः करोति स्वदेशजम्।
> तेन द्रव्यं गृहीतं यदनष्टं कूपवद्गतम् ॥ १ ॥

अथ चिक्कणेनार्थाधिकारिणा कृतेन यद्भवति तदाह—

**चिक्कणादर्थलाभः पाषाणाद्वल्कलोत्पाटनमिव ॥ २० ॥**

टीका—चिक्कणः कृपणस्तेन योऽर्थो गृहीतस्तस्य लाभः किंविशिष्ट इव? पाषाणाद्वल्कलोत्पाटनमिव। यथा पाषाणस्य वल्कलोत्पाटनं। यदि पाषाणस्य वल्कलोत्पाटनं भवति तत्कृपणेन गृहीतोऽर्थो लभ्यत एव। तथा चात्रिः—

> यत्कालं स्पदो यत्कृपणेन हृतं धनम्।
> यतस्तत्र प्रलभ्येत तस्मात्तं दूरतस्त्यजेत् ॥ १ ॥

अथाधिकारिणः सल्लक्षणमाह—

**सोऽधिकारी यः स्वामिना सति दोषे सुखेन निगृहीतुं शक्यते २१**

टीका—अधिकारिणां मध्ये

> सोऽधिकारी सदा शस्यः कृत्वा दोषं महीभुजे।
> ददाति याचितो वित्तं सात्मायसमवस्तुना ॥ १ ॥

अथाधिकारिणो यान्न कुर्यात्तानाह—

**ब्राह्मणक्षत्रियसम्बन्धिनो न कुर्यादधिकारिणः ॥ २२ ॥**

टीका—गतार्थमेतत् ।

अथ तेषां त्रयाणां दोषमाह—

**ब्राह्मणो जातिवशात्सिद्धमप्यर्थं कृच्छ्रेण प्रयच्छति, न प्रयच्छति वा ॥ २३ ॥**

**क्षत्रियो नियुक्तो याचितः खड्गं दर्शयति ॥ २४ ॥**

**सम्बन्धी ज्ञातिभावेनाक्रम्य, सामवायिकान् सर्वमप्यर्थं ग्रसते ॥२५॥**

टीका—बन्धु प्रकृतिपुरुषान् मेलयित्वा समकर्मधर्मिणश्च सर्वमर्थं ग्रसते ।

**सम्बन्धस्त्रिविधः श्रौतो मौख्यो यौनश्च ॥ २६ ॥**

टीका—बन्धुर्योऽसौ सम्बन्धी प्रोक्तस्तस्य सम्बन्धस्त्रिविध । श्रौतो मौख्यो यौनश्च । योऽसौ श्रौत सम्बन्ध स कथंभूत ? गुरुशिष्यन्यायेन यस्य पार्श्वे श्रुत कृत न तमधिकारेऽर्थस्य नियोजयेत्, तेन गृहीतोऽर्थो याचितुमपि न शक्यते । मुखोद्भवो मौख्य प्रतिपक्षतया सैवाभिक प्रोच्यते

तस्य प्रकृत्य तदुच्यते—

**वाचिकसम्बन्धे नास्ति सम्बन्धानुवृत्तिः ॥ २७ ॥**

टीका—यो वाचिकसम्बन्धी भवति तस्य सम्बन्धानुवृत्ति अन्यथा करण नास्ति । यत स्वबन्धनस्याप्रतिष्ठा स्यात् । तथा च यौन ।

**योनेः सकाशादुत्पन्नो यौनः ॥ २८ ॥**

टीका—भ्रातृपितृव्यादिलक्षण । तथापि यौन नार्थाधिकारे नियोजयेत् । यतस्तस्य स्वरूप पूर्वमाख्यातमेव । एवं त्रिविध सम्बन्ध. ।

अथ यं नाधिकारिण कुर्याद्‌द्वयोऽपि तमाह—

**न तं कमप्यधिकुर्यात्सत्यपराधे यमुपहत्यानुशयीत ॥ २९ ॥**

टीका—किं बहुना एतेषां त्रयाणां पूर्वोक्तानां कर्मण्येकमपि नाधि-कुर्यात् नाधिकारे नियोजयेत् । यमुपहत्य हत्वा अनुशयीत च पश्चात्तापं कुर्यात् । तथा च गुरु —

सम्बन्धिनां त्रयाणां च न चैकमपि योजयेत् ।
अर्थाधिकारे न चापि य हत्वा दुःखमाप्नुयात् ॥ १ ॥

अथ मान्येनाधिकारिणा कृतेन यद्भवति तदाह—

**मान्योऽधिकारी राजाज्ञामवज्ञाय निरवग्रहश्चरति ॥ ३० ॥**

टीका—यो मान्य पूज्यो भवति सोऽधिकारी न क्रियते । कस्मात् ? स आमान्य नृपते पूज्य मन्ये गतशङ्क उच्छृङ्खलतया चरति पर्यटति । तथा च नारद —

मान्योऽधिकारी मान्योऽहमिति मत्वा न शङ्कते ।
भक्षयन्नृपवित्तानि तस्मात्तं परिवर्जयेत् ॥ १ ॥

• अथ चिरसेवकेनाधिकृतेन यद्भवति तदाह—

**चिरसेवको नियोगी नापराधेष्वाशङ्कते ॥ ३१ ॥**

टीका—चिरसेवक प्रभूतकालसेवको न शङ्कते न काचिच्छङ्कां करोति । कस्मिन् सति [२] अपराधे कृत सति । तस्माच्चिरसेवकं नाधिकारे नियोजयेत् । तथा च देवल —

चिरभृत्य च यो राजा वित्तकृत्येषु योजयेत् ।
स वित्तं भक्षयन् शङ्कां न करोति कथञ्चन ॥ १ ॥

अथोपकारिणाऽर्थाधिकारिणा कृतेन यद्भवति तदाह—

**उपकर्ताधिकारस्थ उपकारमेव ध्वजीकृत्य सर्वमवलुम्पति ३२**

टीका—यो राजा उपकारिणमर्थाधिकारे नियोजयेत् सोऽधिकारी सर्वं यत्प्राप्नोति तद्विलुम्पति भक्षयति । किं कृत्वा [१] ध्वजीकृत्य अग्रेकृत्य । कम् [१]

उपकारमेव पूर्वोपकारो मन्यते । तस्मात्पूर्वोपकारिणमधिकारे न योजयेत् । तथा च वशिष्ठ —

पूर्वोपकारिणं भूयो नाधिकारे नियोजयेत् ।
स ■ कीर्त्तयमानस्तु सर्वं वित्तं प्रभक्षयेत् ॥ १ ॥

अथ सहपांशुक्रीडितेनामात्येन वृत्तेन यद्भवति तदाह—

सहपांशुक्रीडितोऽमात्योऽतिपरिचयात्स्वयमेव राजायते ।३३।

टीका—योऽमात्य सहपांशुक्रीडितो भवति बाल्यात्प्रभृति सदानुगो भवति, स किं करोति ? राजायते राजेवाचरति अहं राजेति मन्यते । कस्मात् ? अतिपरिचयात् । तस्मात्सहपांशुक्रीडितममात्यं न कुर्वीत । तथा च जैमिनि —

बाल्यात्प्रभृति य सार्द्धं क्रीडितो भूभुजा सदा ।
स च स्यान्मन्त्रिणः स्थाने तन्नून पार्थिवायते ॥ १ ॥

अथान्तर्दुष्टेन मन्त्रिणा यद्भवति तदाह—

अन्तर्दुष्टो नियुक्तः सर्वमनर्थमुत्पादयति ॥ ३४ ॥

टीका—उत्पादयति जनयति । किं तत् ? अनर्थं दुःखप्रदं । कोऽसौ ? इदमाक्रूर । पुनः कथंभूत ? नियुक्तोऽमात्यस्थाने स्थापित । तस्मादन्तर्दुष्टं नामात्यस्थाने स्थापयेत् । तथा च गर्ग —

अन्तर्दुष्टममात्यं य कुरुते पृथिवीपति ।
सोऽनर्थोऽत्थितस्तस्य कृत्वा सर्वराज्य विनाशयेत् ॥ १ ॥

अन्तर्दुष्टस्यामात्यस्य विषये शकुनिसकटाख्यौ निदर्शनं ताभ्यां यन्निदर्शनं तद्बृहत्कथायां ज्ञेयम् ।

अथ सुहृदामात्येन वृत्तेन यद्भवति तदाह—

सुहृदि नियोगिन्यवश्य भवति धनमित्रनाशः ॥ ३५ ॥

टीका—यो राजा सुहृदं मित्रं नियोगिनं करोति तस्य किं स्यात् ? धनमित्रनाशो भवति । यः सुहृद्भवति स मित्रं मत्वा भूपालवित्तं भक्षयति । वित्ते भक्षिते तदर्थं स व्यापादयति स राजा ततो मित्रनाशमपर्के याति । तस्मान्मित्रं नियोगिनं न कारयेत् । तथा च रैभ्यः —

> नियोगे सन्नियुक्तस्तु सुहृद्वित्तं प्रभक्षयेत् ।
> तद्वाधिक्येन निःशङ्कस्ततो वधमवाप्नुयात् ॥ १ ॥

अथ मूर्खेण नियोगिना कृतेन यद्भवति तदाह—

मूर्खस्य नियोगो भर्तुर्धर्मार्थयशसां सन्देहो निश्चितमनर्थनरकपातौ ॥ ३६ ॥

टीका—मूर्खस्य जडात्मकस्य योऽसौ नियोगोऽधिकारः स किंविशिष्टः ? सन्देहः कृच्छ्रप्राप्तिः । केषां ? धर्मार्थयशसां । धर्मसन्देहो धर्मविषये निश्चयो न भवति । तथार्थप्राप्तिः कृच्छ्रेण स्यात् । तथा यशः कृच्छ्रेण स्यात् । एतत्त्रयं तावत् सन्दिग्धं । द्वौ पदार्थौ पुनर्निश्चयेन भवतः—अनर्थं आपप्राशस्तकर्म करोति येनापप्राप्नोति, तत्कर्म करोति येन स्वामिना नरकपाती भवति । तस्मान्मूर्खं नियोगिनं न कुर्यात् । तथा च नारदः —

> मूर्खे नियोगयुक्ते तु धर्मार्थयशसां सदा ।
> सन्देहोऽत्र पुनर्नूनमनर्थो नरकं गतिः ॥ १ ॥

अथाधिकारिणं वृद्धिर्यथा भवति तदाह—

सोऽधिकारी चिरं नन्दति स्वामिप्रसादो नोत्सेकयति ॥ ३७ ॥

टीका—सोऽधिकारी नन्दति चिरं प्रभूतकालं अधिकारस्यो वृद्धिं याति । न कदाचिदधिकाराद्भ्रश्यते । यं अधिकारिणं नोत्सेकयति न स गर्वं या-

ति। कोऽसौ ? स्वामिप्रसादः। योऽधिकारी स्वामिप्रसादे स्थितः न कदाचित्स गर्वं वहते, अभिमानं न बहु मन्यते स चिरं नन्दतीति। तथा च शुक्रः—

> स्वामिप्रसादमासाद्य न गर्वं कुरुतेऽत्र यः।
> स नन्दति चिरं कालं च्यवते नाधिकारतः॥ १॥

अथ परिच्छदस्य स्वरूपमाह—

**किं तेन परिच्छदेन यत्रात्मक्लेशेन कार्यं सुखं वा स्वामिनः ३८**

टीका—किं तेन परिच्छदेन नियोगिनां परिग्रहेण यत्र यस्मिन्विद्यमाने स्वामी स्वयं कृत्यानि सुखं वा करोति। नियोगिनां स्वगुणे येन नृपकार्ये साधयित्वा दर्शयति, यथा येन स्वामिनः सुखं भवति अक्लेशेन। तथा च नारदः—

> स्वयमाहृत्य भुंजाना बलिनोऽपि स्वभावतः।
> नरेन्द्राश्च गजेन्द्राश्च प्रायः सीदन्ति केवलाः॥ १॥

अथ गजदृष्टान्तेन राज्ञः आत्मकृत्यकरणे निषेधमाह—

**का नाम निर्वृतिः स्वयमूढतृणभोजिनो गजस्य॥ ३९॥**

टीका—गजस्य हस्तिनः नामाहो का निवृतिः का योग्यता। किंविशिष्टस्य गजस्य ? स्वयमूढतृणभोजिनः स्वयमूढान्याहृतानि तृणानि येन तान्येव भुंक्ते। एवं राजापि यः स्वयं कृत्यानि करोति तस्य का महिमा। तस्मात्कृत्यानां सकाशात्कार्याणि कारापणीयानि। उक्तं च यत—

> स्वयमाहृत्य भुंजाना बलिनोऽपि स्वभावतः।
> नरेन्द्राश्च गजेन्द्राश्च प्रायः सीदन्ति दुःखिताः॥ १॥

अथ स्वेच्छाना नियोगिनां स्वरूपमाह—

**अश्वसधर्माणः पुरुषाः कर्मसु नियुक्ता विकुर्वते॥ ४०॥**

टीका—विकुर्वते विक्रिया कुर्वते। के ? एते पुरुषाः। किंविशिष्टाः ? नियुक्ताः अधिकारे नियोजिताः। किंविशिष्टाः पुनः ? अश्वसधर्माणः। यथा

अश्वा सैन्धवास्ते योग्यतां नीता दान्ता विकृतिं दर्शयन्ति तथा नियोगिनोऽपि। तथा बादरायणः—

> अश्वा यथा विकुर्वन्ति दान्ता अपि च सैन्धवाः।
> तथाप्यपुरुषा ज्ञेया येऽधिकारे नियोजिताः॥ १॥

अथाधिकारिणा यत्कर्तव्यं तदाह—

**तस्मादहन्यहनि तान्परीक्षेत॥ ४१॥**

टीका—तस्मात्कारणात्तानधिकारिणः परीक्षेत परीक्षान्वितान् कुर्यात्। अहन्यहनि नित्यं नित्यमिति। तथा च भृगुः—

> परीक्षा भूभुजा कार्या नित्यमेवाधिकारिणाम्।
> यस्मात्ते विकृतिं यान्ति प्राप्य सम्पदमुत्तमाम्॥ १॥

अथ नियोगिना विषये यादृक्सम्भावना नृपतेस्तामाह—

**मार्जारेषु दुग्धरक्षणमिव नियोगिषु विश्वासकरणम्॥ ४२॥**

टीका—ननु कस्मात् नित्यमेव परीक्षा क्रियते? यतस्तेषां विषये यद्विश्वासकरणं तद्विश्वासस्थानं न भवति। मार्जारेषु दुग्धरक्षणं यथा तथा नियोगिष्वपि। तथा च भारद्वाजः—

> मार्जारेष्विव विश्वासो यथा नो दुग्धरक्षणे।
> नियोगिनां नियोगेषु तथा कार्यो न भूभुजा॥ १॥

अथ नियोगिना ऋद्धेः स्वरूपमाह—

**ऋद्धिश्चित्तविकारिणी नियोगिनामिति सिद्धानामादेशः॥४३॥**

टीका—आदेश इति वचनं। केषां। सिद्धानां सिद्धपुरुषाणां। किंविशिष्ट आदेशः। चित्तविकारिणी भवति। कासौ? ऋद्धिः सम्पत्। केषां? नियोगिनाम्। तथा च नारदः—

> तावन्न विकृतिं याति पुरुषोऽपि कुलोद्भवः।
> यावत्समृद्धिसंयुक्तो न भवेदत्र भूतले॥ १॥

अथ समृद्धस्याधिकारिण. स्वरूपमाह—

**सर्वोऽप्यतिसमृद्धोऽधिकारी भवत्यायत्यामसाध्यः ॥ ४५ ॥**

टीका—असाध्यो भवति। कोऽसौ? अधिकारी। किंविशिष्टः? अतिसमृद्धः श्रीमान्। कस्मिन् काले? आयत्यां आगामिकाले। किंविशिष्टो अधिकारी? सर्वोऽपि। अथवा कृच्छ्रसाध्यो भवति, अथवा स्वामिपदमभिलषति, तस्मादधिकारी अतिसमृद्धो न कर्तव्यः। तथा च नारदः—

अतिसमृद्धिसंयुक्तो नियोगी यस्य जायते।
असाध्यो भूपतेः स स्यात्तस्यापि पदवाञ्छकः ॥ १ ॥
तुल्यार्थं तुल्यसामर्थ्यं मर्मज्ञं व्यवसायिनम्।
आत्मनोऽप्यधिकं भृत्यं यो न हन्यात्स हन्यते ॥ २ ॥

तथा च गुरुः—

प्रेष्याः कर्मसु पटवः पूर्णा भलसा भवन्ति ये भृत्याः।
तेषां जलौकसामिव पूर्णा नैवात्र अंदता न्याय्या ॥ १ ॥

अथामात्यस्य दोषानाह—

**भक्षणमुपेक्षणं महाहीनत्वमुपरोधः प्राप्तार्थाप्रवेशो द्रव्यविनिमयश्चेत्यमात्यदोषाः ॥ ४६ ॥**

टीका—एते षट् दोषा यस्यामात्यस्य भवन्ति तं सचिवं न कुर्यात्। के एते दोषा.? भक्षणं तावत् यो राजद्रव्यं भक्षयति, तथा उपेक्षणं यो राजवित्तं विनाशयति उपेक्षते अवज्ञा करोति; महाहीनत्वं यस्य बुद्धेर्विनाशो भवति; तथा उपरोधो यस्य भवति; अन्येन राजद्रव्यं भक्ष्यमाणं दृष्ट्वा तस्योपरोधात्न किंचिद्वदति; तथा प्राप्तार्थाप्रवेशः समायातो योऽसौ राजार्थस्तं कोशे न क्षिपति; तथा द्रव्यविनिमयः द्रव्यस्य समायातस्य राजकीयस्य उत्तमस्य यो विनिमयं करोति; हीनं संचारयति उत्कृष्टं नाणकादिकं गृह्णाति। तथा च शुक्रः—

१ अत्र "रिक्तता" इति पाठः युक्त.

योऽमात्यो राजकीयं स्वं बहुधा विप्रकारयेत् ।
सदैव दुष्टभावेन स त्याज्यो सचिवो नृपैः ॥ १ ॥

अथ भूभुजा यादृशं करणं कार्यं तदाह—

**बहुमुख्यमनित्यं च करणं स्थापयेत् ॥ ४७ ॥**

टीका—स्थापयेत् कुर्यात् । किं तत् ? करणं पञ्चकुलं । किंविशिष्टं ? बहुमुख्यं बहवो मुख्याः प्रधाना यत्र तद्बहुमुख्यं । पुनरपि किंविशिष्टं ? अनित्यं न नित्यं अशाश्वतमिति । अनित्यं अन्यपुरुषैः कार्यं ।

तथा च गुरुः—

अशाश्वतं प्रकर्त्तव्यं करणं क्षितिपालकैः ।
बहुशिष्टं च यस्मात्तदन्यथा वित्तभक्षकम् ॥ १ ॥

अथ नित्याधिकारस्य स्वरूपमाह—

**स्त्रीष्वर्थेषु च मनागप्यधिकारे ज्ञातिसम्बन्धः ॥ ४८ ॥**

टीका—(१) परदेशजं चापेक्ष्य नित्यश्चाधिकारः । अनित्यो विनाशी । कोऽसौ ? अधिकारः । किंविशिष्टो ? मनागपि स्तोकोऽपि । कासु विषये ? स्त्रीषु तथार्थेषु सम्बन्धी न कार्यः । तथा विदेशजानां विषये नित्योऽधिकारः ।

तथा च गुरुः—

स्त्रीष्वर्थेषु च विज्ञेयो नित्योऽयं ज्ञातिसम्भवः ।
बन्धस्य नाधिकारोऽत्र तथा नित्यो विदेशजे ॥ १ ॥

अथ पञ्चकुलस्य स्वरूपमाह—

**आदायकनिबन्धकप्रतिबन्धकनीवीग्राहकराजाध्यक्षाः करणानि ॥**

टीका—करणशब्देन पञ्चकुलमभिधीयते । तत्र प्रथमस्तावदादायकः यो राजद्रव्यं समायातं गृह्णाति । द्वितीयो निबन्धको यो वहिकायां लिखति । तृतीयः प्रतिबन्धको यो मुद्रां ददाति । चतुर्थो नीवीग्राहको यो भाण्डागारे क्षिपति । पञ्चमो राजाध्यक्षो यश्चतुष्टयमेतत्त्वयं दृष्टं करोति । एतैः पञ्चभिः करणमुच्यते ।

अथ नीवीलक्षणमाह—

**आयव्ययविशुद्ध द्रव्य नीवी ॥ ५० ॥**

टीका—यद्द्रव्य आयव्ययविशुद्ध भाण्डागारे पतति सा नीवी प्रोच्यते।

अथायव्ययविशुद्धा नीव्यो यथा क्रियन्ते तदाह—

**नीवी निबन्धकपुस्तकग्रहणपूर्वकमायव्ययौ विशोधयेत् ॥ ५१ ॥**

टीका—विशोधयेत् विशुद्धौ कुर्यात् । कौ ? आयव्ययौ । कस्या ? नीव्या । नीवीनिबन्धकस्य यः पुस्तकग्रहण बहिकालक्षण यदस्ति तत्पूर्वम्। तत्र प्रथम लिखित्वा तत आयव्ययविशुद्धि क्रियते । तथा च—

> शुद्धपुस्तकहस्ते यत्पुस्तक समवस्थितम् ।
> आयव्ययो च तत्रस्थौ यो तौ वित्तस्य शुद्धिदौ ॥ १ ॥

अथायव्ययविप्रतिपत्तौ पञ्चकुलस्य निश्चयो यथा भवति तदाह—

**आयव्ययविप्रतिपत्तौ कुशलकरणकार्यपुरुषेभ्यस्तद्विनिश्चयः ५२**

टीका—यदायव्ययविप्रतिपत्ति पञ्चकुलस्य भवति तदा किं कार्य भूभुजा ? तदा कुशलकरणकार्यपुरुषेभ्यस्तद्विनिश्चय कार्य । कुशलकरणे ये कार्यपुरुषा प्रधानपुरुषा कुशलानि अलोलुपानि करणानि इन्द्रियाणि येषां त कुशलकरणा विशिष्टा इत्यर्थ । तेभ्य सकाशात्तद्विनिश्चयो विप्रतिपत्तिविषये निश्चय कार्य । तथा च शुक्र —

> यदा विप्रतिपत्तिश्च करणस्य प्रजायते ।
> प्रवेशे निश्चये वापि साधुभ्यो निश्चय क्रियात् ॥ १ ॥

अथ राज्ञो नियोगिना पार्श्वादर्थागमोपाया भवन्ति तानाह—

**नित्यपरीक्षण कर्मविपर्ययः प्रतिपत्तिदान नियोगिष्वर्थोपायाः॥५३।**

टीका—नियोगिनां सकाशादत्र एते त्रयोऽर्थोपाया । एक तावन्नित्यपरीक्षण चरै कृत्वा एतेषा वृद्धि विज्ञाय दण्डनीया । तथान्यो द्वितीय कर्मविपर्यास अधिकारस्फेटन ततो भयात् येन वित्त प्रददते । तथा

प्रतिपत्तिदान तृतीयोऽर्थोपाय । नियोगिने उच्चासनाय दीयते तेन सुप्रहृष्ट मनसा अर्थं ददाति । तथा च गुरु —

छिद्रान्वेषणतो लाभो नियोगिजनसम्भव ।
अधिकारविपर्यासात्प्रतिपत्तेस्तथापर ॥ १ ॥

अथ नियोगिनो राज्ञा यथा सर्वस्वमपि यच्छन्ति तदाह—

नापीडिता नियोगिनो दुष्टव्रण इवान्तःसारमुद्गिरन्ति ५४

टीका—यन्नियोगिना पीडा न क्रियते ताडनरूपा धनादिभिस्तावत्ते अन्त सार गृहमध्यगत प्रधानद्रव्य नोद्गिरन्ति न प्रयच्छन्ति । क इव ? दुष्टव्रणा इव यथा दुष्टव्रणा अनपीडिता अन्त सार पूतिरक्त नोद्गिरन्ति तथा नियोगिनोऽपि । तथा च चाणक्य —

शास्त्याधिकारिणो वित्तमन्त सार वदन्ति नो ।
निपीड्यन्ते न ते यावद्गाढ दुष्टव्रणा इव ॥ १ ॥

अथ महीपतीना नियोगिना सकाशाद्यथा धनलाभो भवति तदाह—

पुनःपुनरभियोगं नियोगिषु भूपतीनां वसुधाराः ॥ ५५ ॥

टीका—पुन पुनर्वारवार नियोगिना योऽसावभियोग स्वेटन स्थापन स महीपतीना किंविशिष्टो ? वसुधारा द्रव्यप्रवाहा ।

सकृन्निपीडितं हि स्नानवस्त्रं किं जहाति स्निग्धताम् ॥ ५६ ॥

टीका—यथा स्नानवस्त्र सकृन्निपीडितमेकवार प्रक्षालित स्निग्धत्व मल न जहाति, तथा नियोगिनोऽपि भूयोभूयस्ताडिता दण्डिता द्रव्य प्रयच्छन्ति । तथा च शुक्र —

यथाहि स्नानज वस्त्र सकृत्प्रक्षालित न हि ।
निर्मल स्यान्नियोगी च सकृद्दण्डे न शुद्ध्यति ॥ १ ॥

अथाधिकारी स्वामिन सकाशाद्यथार्थमानौ लभते तदाह—

**देशमपीडयन् बुद्धिपुरुषकाराभ्यां पूर्वनिबन्धमधिकं कुर्वन्नर्थ-मानौ लभते ॥ ५७ ॥**

टीका—पूर्वनिबन्धं पूर्वव्यवहारमधिकं प्रचुरं कुर्वन्। काभ्यां ? बुद्धिपौरुषाभ्यां। पुनः किंकुर्वन् ? अपीडयन् सानन्दं कुर्वन्। कं ? देशं राष्ट्रं। योऽधिकारी देशमपीडयन् निबन्धान् सर्वव्यवहारान् वृद्धिं नयति स स्वामिनः सकाशादर्थं मानं च प्राप्नोति। तथा च गुरुः—

> यो देशं रक्षयन् यत्नात् स्वबुद्ध्या पौरुषेण च।
> निबन्धान् वर्द्धयेद्राज्ञः स वित्तं मानमाप्नुयात् ॥ १ ॥

अथ भूभुजा नियोगिषु विषये यत्कृत्यं तदाह—

**यो यत्र कर्मणि कुशलस्तं तत्र नियोजयेत् ॥ ५८ ॥**

टीका—योऽधिकारी यस्मिन् कर्मणि कुशलः प्रवीणस्तत्कर्माधिकारे तस्य नियोजयेत्। अस्य सूत्रस्यार्थमागामिकसूत्रे वदिष्यन्ति।

अथाकुशलेन कर्मण्यभियुक्तेन यद्भवति तदाह—

**शास्त्रविदप्यदृष्टकर्मा कर्मसु विषादं गच्छेत् ॥ ५९ ॥**

टीका—विषादं गच्छेत् मुह्यतीत्यर्थः। कोऽसौ ? अदृष्टकर्मा। केषु ? कर्मसु। कथंभूतः ? अदृष्टकर्मा। येन तत्कर्म कृत्यं न भवति तस्मिन् कर्मणि नियोजितो मोहं याति। तथा च भृगुः—

> येन यत्र कृतं कर्म स तस्मिन्योजितो नृपे।
> नियोगी मोहमायाति यद्यपि स्याद्विचक्षणः ॥ १ ॥

अथ नियोगिना यत्कर्त्तव्यं तदाह—

**अज्ञापयित्वा भर्तुर्न कंचिदारम्भं कुर्यादन्यत्रापत्प्रतीकारेभ्यः ॥ ६० ॥**

टीका—नियोगी न कंचित्स्वल्पमपि आरम्भं कृत्यं कुर्यात्। किं कृत्वा ? अनिवेद्य अकथयित्वा। कस्य ? भर्तुः स्वामिनः। किं सर्वे ? नेत्याह— अन्यत्र मुक्त्वा। कम् ? आपत्प्रतीकारं। व्यसनमसह्यं मुक्त्वा। सद्ग्रामादि-

काले यदा कदाचिदापद्भवति तदा तस्याः प्रतीकारो नाशो यथा भवति तथा कार्यम्; अपृष्टेनापि । केन ? नियोगिना । कदाचिदेव कोऽपि कार्यारम्भः स्वामिनमपृष्ट्वा न कर्त्तव्यः । सङ्ग्रामादिकाले तु न स्वामी प्रष्टव्यः । तथा च भागुरिः—

न स्वामिवचनाद्बाह्यं कर्म कार्यं नियोगिना ।
अपि स्वल्पतरं पश्च मुक्त्वा शत्रुसमागमम् ॥ १ ॥

अथ सहसोपचितार्थे भूभुजा यत्कर्त्तव्यं तदाह—

**सहसोपचितार्थो मूलधनमात्रेणावशेषयितव्यः ॥ ६१ ॥**

टीका—अवशेषयितव्यो वृद्धिं नेयः । कोऽसौ ? अर्थः । किंविशिष्टः ? सहसोपचितः अकस्मादिव प्राप्नोति निधनादिकं; केनावशेषयितव्यः ? मूलधनेन भाण्डागारचित्तेन येन भाण्डागारो वृद्धिं याति तत्प्रमाणात् । तथा चात्रिः—

अचिन्तितस्तु लाभो यो नियोगस्य तु जायते ।
स कोशे संनियोज्यश्च येन तस्याधिकं भवेत् ॥ १ ॥

अथ वणिग्जनस्य द्विगुणलाभाधिके यद्राज्यकृत्यं तदाह—

**मूलधनाद्द्विगुणाऽधिको लाभो भाण्डोत्थो यो भवति स राज्ञः ६२**

टीका—भाण्डविक्रये कृते मूलधनाद्द्विगुणादभ्यधिको यदि लाभः स्यात्तदा स लाभः पार्थिवस्यार्पणीयः । तथा च शुक्रः—

यदि मूलधनात्कश्चिद्द्विगुणाभ्यधिकं लभेत् ।
तत्तस्य मूलद्विगुणं दत्त्वा शेषं नृपस्य हि ॥ १ ॥

अथ परस्परविवादेन नियोगिना भूपस्य यद्भवति तदाह—

**परस्परकलहो नियोगिषु भूभुजां निधिः ॥ ६३ ॥**

टीका—निधिर्निधानं । कोऽसौ ? परस्परकलहः, अन्योऽन्यविवादः । केषां ? नियोगिनामधिकारिणां । केषां निधिः ? महीभुजां । तथा च गुरुः—

नियोगिनां मिथो वादो राज्ञां पुण्यैः प्रजायते ।
यतस्तेषां विवादे च लाभः स्याद्भूपतेर्बहुः ॥ १ ॥

अथ नियोगिनी या लक्ष्मीः यथा भूम्यां कोशो भवति तदाह—

**नियोगिषु लक्ष्मीः क्षितीश्वराणां द्वितीयः कोशः ॥ ६४ ॥**

टीका—द्वितीयः कोशः अपरो भाण्डागारः । केषां ? क्षितीश्वराणां । काऽसौ ? लक्ष्मीः । केषु ? नियोगिषु अधिकारिषु । नियोगिनां यासौ लक्ष्मीः सा नृपाणां भाण्डागारो द्वितीयः । तथा च नारदः—

येन भृत्यगता संपत् सैव संपन्महीपतेः ।
यतः कार्ये समुत्पन्ने निःशेषस्तां समानयेत् ॥ १ ॥

अथ राज्ञः सर्वसंग्रहाणां मध्ये यः प्रधानसंग्रहस्तमाह—

**सर्वसङ्ग्रहेषु धान्यसंग्रहो महान् । यतस्तन्निबन्धनं जीवितं सकलप्रयासश्च ॥ ६५ ॥**

टीका—सर्वेषां संग्रहाणां हस्त्यश्वप्रभृतीनां मध्ये योऽसौ धान्यसंग्रहः स महानुत्तमः । ननु कथं स उत्तम इत्याह । यज्जीवितनिबन्धनम् । स जीवितव्यकारणम् । यतः सकलप्रयासः तथा यस्य धान्यस्य कारणात्सकलः प्रयासः क्लेशः कृषिकर्मादिकः क्रियते । तथा च भृगुः—

सर्वेषां संग्रहाणां च शस्योऽशस्य च सङ्ग्रहः ।
यतः सर्वाणि भूतानि क्लिश्यन्ति च तदर्थतः ॥ १ ॥

अथ भूयोऽपि धान्यमाहात्म्यमाह—

**न खलु मुखे क्षिप्तः खरोऽपि द्रम्मः प्राणत्राणाय यथा धान्यं ॥६६॥**

टीका—न जायते । कोऽसौ ? द्रम्मो नाणकविशेषः । किंविशिष्टः ? खरोऽपि श्रेष्ठोऽपि । किंविशिष्ट ? क्षिप्तः । कस्मिन् ? मुखे । किमर्थं न भवति ? प्राणत्राणाय जीवनरक्षार्थं यथा । किं ? धान्यं । खलु निश्चयेन । तथा च गर्गः—

प्रभूतैरपि नो द्रव्यैः प्राणत्राणं विधीयते ।
मुखे क्षिप्तेः यथान्नेन स्वल्पेनापि विधीयते ॥ १ ॥

अथ सर्वधान्यानां यद्धान्यं निरुपद्रवं भवति तदाह—

**सर्वधान्येषु चिरजीविनः कोद्रवाः ॥ ६७ ॥**

टीका—य एते कोद्रवा धान्यविशेषास्ते । किंविशिष्टाः ? चिरजीविनः चिरकालं तिष्ठन्ति न कीटकैर्भक्ष्यन्ते तस्मात्तेषां संग्रहः कार्यः । तथा च भारद्वाजः—

तुषधान्यानि सर्वाणि कोद्रवप्रभृतीनि च ।
चिरजीवीनि तान्याहुस्तेषां युक्तः सुसंग्रहः ॥ १ ॥

अथ धान्यस्य संगृहीतस्य यत्कर्त्तव्यं तदाह—

**अनवं नवेन वर्द्धयितव्यं व्ययितव्यं च ॥ ६८ ॥**

टीका—यस्य धान्यस्य संग्रहः कृतस्तदर्द्धं वृद्धिं केवं व्याजेन देयं । यद्व्याजेन प्राप्तं तस्य व्यय कार्यस्तेन मूलहानिः न स्यात् । तथा च वशिष्ठः—

अनवं यद्भवेत्सस्यं तन्नवेन विवर्द्धयेत् ।
वृद्ध्या प्राप्तो भवेद्यस्तु तस्य कार्यो व्ययो बुधैः ॥ १ ॥

अथ सर्वरसानां योऽसौ प्रधानो रसस्तमाह—

**लवणसंग्रहः सर्वरसानामुत्तमः ॥ ६९ ॥**

गतार्थमेतत् ।

अथ लवणरसस्य माहात्म्यमाह—

**सर्वरसमयमप्यन्नमलवणं गोमयायते ॥ ७० ॥**

टीका—यतः सर्वरसमयमप्यन्नं अलवणं लवणवर्जितं गोमयायते गोमयसदृशं भवति । तथा च हारीतः—

स्याद्रसैः पञ्चभिर्युक्तं लवणेनोज्झितं यदि ।
जिह्वा तद्गोमयास्वादं गृहीत्वा........ ॥

इत्यमात्यसमुद्देशः ।

# १९ जनपदसमुद्देशः ।

अथ राष्ट्रसमुद्देशो व्याख्यायते । तत्रादावेव राष्ट्रलक्षणमाह—

**पशुधान्यहिरण्यसंपदा राजते इति राष्ट्रम् ॥ १ ॥**

तथा च भागुरि —

पशुभिर्विविधैर्धान्यैः कुप्यभाण्डैः पृथग्विधैः ।
राजते येन लोकेऽत्र तद्राष्ट्रमिति कीर्त्यते ॥ १ ॥

अथ देशो येन कथ्यते तदाह—

**भर्तुर्दण्डकोशवृद्धिं दिशतीति देशः ॥ २ ॥**

टीका—भर्तुः स्वामिनो दिशति ददाति दण्डकोशवृद्धिमिति देशोऽभिधीयते । तथा च शुक्र —

स्वामिनः कोशवृद्धिं च सैन्यवृद्धिं तथा परम् ।
यस्माद्दिशति नित्यं स तस्माद्देश उदाहृतः ॥ १ ॥

अथ सोऽपि यथा विषयः प्रोच्यते तथाह—

**विविधवस्तुप्रदानेन स्वामिनः सद्मनि गजान् वाजिनश्च सिनोति बध्नातीति विषयः ॥ ३ ॥**

टीका—तथा च शुक्र —

विविधान् वाजिनो नागान् स्वामिसद्मनि नित्यशः ।
सिनोति च यतस्तस्माद्विषयः प्रोच्यते बुधैः ॥ १ ॥

अथ सोऽपि विषयो येन कारणेन मण्डलं प्रोच्यते तदाह—

**सर्वकामधुक्त्वेन पतिहृदयं मण्डयति भूषयतीति मण्डलम् ।४।**

टीका—तथा च शुक्र —

सर्वकामसमृद्ध्या च नृपतेर्हृदयं यतः ।
मण्डनेन समायुक्तं कुरुतेऽनेन मण्डलम् ॥ १ ॥

तदेव मण्डलं येन कारणेन जनपदः कथ्यते तदाह—

जनस्य वर्णाश्रमलक्षणस्य द्रव्योत्पत्तेर्वा पदं स्थानमिति जनपदः ॥ ५ ॥

टीका—तथा च शुक्रः—

वर्णाश्रमाणां सर्वेषां द्रव्योत्पत्तेश्च वा पुनः ।
यस्मात्स्थानं भवेत्सोऽत्र तस्माज्जनपदः स्मृतः ।

अथ दारकस्य स्वरूपमाह—

निजपतेरुत्कर्षजनकत्वेन शत्रुहृदयानि दारयति भिनत्तीति दारकम् ॥ ६ ॥

टीका—दारका उद्धतास्तेषां समूहो दारकम् । तथाच जैमिनिः—

भर्तुरुत्कर्षदानेन शत्रूणां हृदयं यतः ।
दारका दारयन्ति स्म प्रभूता दारकं ततः ॥ १ ॥

अथ निर्गमस्य गुणानाह—

आत्मसमृद्ध्या स्वामिनं सर्वविपद्भ्यो निर्गमयतीति निर्गमः ७

टीका—निर्गमो नियोगविशेषः कथ्यते । यो निर्गमयति । कं ? स्वामिनं । केभ्यो ? व्यसनेभ्य आपद्भ्यः । कया कृत्वा ? आत्मसमृद्ध्या निजवित्तेन ।

तथा च शुक्रः—

मोचापयति यो वित्तैर्निजैः स्वामिनमात्मनः ।
व्यसनेभ्यः प्रभूतेभ्यो निर्गमः स इहोच्यते ॥ १ ॥

अथ राष्ट्रगुणानाह—

अन्योन्यरक्षाकरः खन्याकरद्रव्यनागधनवान् नातिवृद्धनातिहीनग्रामो बहुसारविचित्रधान्यहिरण्यपण्योत्पत्तिरदेवमातृकः पशुमनुष्यहितः श्रेणिशूद्रकर्षकप्राय इति जनपदस्य गुणाः ॥ ८ ॥

टीका—राष्ट्र देशस्तस्य एते पूर्वोक्ता गुणाः । यत्र यस्मिन् देशे अन्योन्यरक्षा भवति परस्परं रक्षा भवति । रक्षकाः यत्र खन्यः खन्यो भवन्ति वसुपण्यादीनां, तथा आकरः लवणादीनामुत्पत्तिस्थानम्, तथा नागकानि द्रव्याणि यत्र, तथा नागधनवान् हस्तिधनयुक्तः, नातिवृद्धग्रामो नातिलघुग्रामः, तथा बहुसारः बहवः साराः उत्तमपदार्था यत्र, तथा विचित्रधान्यः विचित्राण्यनेकप्रकाराणि धान्यानि यत्र, तथा हिरण्यं सुवर्णं यत्र, पण्यं मणिमुक्ताप्रवालादीनामुत्पत्तिर्यत्र, अदेवमातृकः न देवमातृको अदेवमातृकः अरघट्टबहुलः, पशवश्चतुष्पदाः, मनुष्याः प्रसिद्धाः तेषां हितोऽनुकूलः सुखावहः इत्यर्थः । य श्रेणिशूद्रकर्षकप्रायः श्रेणयः कुलानि शूद्राः वर्णविशेषाः कर्षकाः हालिकास्ते प्रायो बहुलो यः स गुणवान् देशः कथ्यत इति ।

अथ देशदोषानाह—

**विषतृणोदकोषरपाषाणकण्टकगिरिगर्त्तगह्वरप्रायभूमिर्भूरिवर्षाजीवनो व्यालिलुब्धकम्लेच्छबहुलः स्वल्पसस्योत्पत्तिस्तरुफलाधार इति देशदोषाः ॥ ९ ॥**

टीका—इति देशदोषा भवन्ति । क एते दोषाः ? योऽसौ देशे विषतृणोदको भवति विषसदृशानि कटुकानि तृणानि उदकानि च यत्र, ऊषरो यत्र किञ्चित्तृणं सस्यं वा न सञ्जायते, तथा गह्वराणि कुड्यप्राया भूमिर्यत्र तथा प्रभूतवृष्ट्या यत्र जीवितव्यता न स्तोकवृष्ट्या, तथा व्यालिबहुलो म्लेच्छबहुलश्च, तथा स्वल्पसस्योत्पत्तिः तथा तरुफलाधारः वृक्षफलजीवनं न सस्यं यत्र ।

तथान्यानपि देशदोषानाह—

तत्र सदादुर्भिक्षमेव यत्र जलदजलेन सस्योत्पत्तिरकृष्टभूमिकश्चारम्भः ॥ १० ॥

टीका—यत्र यस्मिन् देशे मेघतोयेन सस्य आरधान्य न भवन्ति तत्र सदैव दुर्भिक्षं, तथा अकृष्टभूमिकश्चारम्भ अन्योन्यारम्भा क्रियन्ते प्रजाभिः न कृष्टभूमि अन्यारम्भा कर्षण न क्रियत इति ।

तथा गुरु—

मेघजेनाम्भसा यत्र सस्य च न प्रेप्सितम् ।
सदैव तत्र दुर्भिक्ष कृष्यारम्भो न यत्र च ॥ १ ॥

अथ क्षत्रियप्राया ग्रामा यादृशा भवन्ति तानाह—

क्षत्रियप्रायग्रामाः स्वल्पास्त्वप्यबाधासु प्रतियुद्ध्यन्ते ॥ १ ॥

टीका—ये ग्रामा क्षत्रियप्राया क्षत्रियबहुला भवन्ति वणिग्जनब्राह्मणा न सन्ति ते किंनिशिता [1] प्रतियुद्ध्यन्ते परस्पर युद्ध कुर्वं—

---

( १ ) मातृकापुस्तके टीका त्रुटिता ।